# श्रीमद्भागवतदशमस्कन्धस्वाहाकारपद्धतिः



सङ्ग्राहकः
डा. पं. वेदनिधि आचार्यः

प्रकाशकः
श्रीव्यासमध्वसंस्कृतविद्यालयः, विजयपुरम्

# श्रीमद्भागवतदशमस्कन्ध-
# स्वाहाकारपद्धतिः

*सङ्ग्राहकः*

डा. पं. वेदनिधि आचार्यः

*प्रकाशकः*

श्रीव्यासमध्वसंस्कृतविद्यालयः, विजयपुरम्

**Śrimad Bhāgavata Daśamaskandha Swāhākāra Paddati**

compiled by **Dr. Pt. Vedanidhi Acharya**

Published by **Sri Vyasa Madhwa Samskrita Vidyalaya**
**Sri Vishnusahasranama Bhavana**
Nimbargi Layout, Torvi Road
Vijayapura-586208
Ph.: 08352-271220, 9480312408

| **Edition** | **Year** | **Copies** |
|---|---|---|
| First | 2022 | 1,000 |

No. of Pages 120



Price **Rs.50**

*Printed by :* **Vagartha,** Hanumanth Nagar, B'lore-19.

# पिबत भागवतं रसमालयम्

दुर्मुख.माघ.वसन्तपञ्चमी ०१.०२.२०१७

## सम्पादकस्य निवेदनम्

भगवान् बादरायणप्रणीतं श्रीमद्भागवतमहापुराणं श्रीकृष्णस्य अक्षरप्राज्यसन्निधानोपेतं प्रतिमास्थानीयं इति सर्वभागवतजनाभिप्रायः विद्यते ।

अस्मिन् पुराणे भगवतः श्रीकृष्णस्य लीलाः मनोवाचामगोचरं तत्वं भगवान्बादरायणेनैव प्रतिपादितं परं अपव्याख्यानादिना करालकलिकालप्रभावेण सात्विकजिज्ञासवः विज्ञान मार्गात् स्खालित्यं मा प्राप्नोत्विति महाकारुणिकशिरोमणिवरेण्यः श्रीमदानन्दतीर्थ-सूर्यसूरिराजः भागवततात्पर्याख्यैः रश्मिजालैः भगवत्तत्वं प्रदर्शया-मास । अयमेव करुणावरुणानां कारुण्यं खलु ।

श्रीमद्भागवतपुराणराजस्य तात्पर्यानुसारेण गम्भीरभावं विलिख्यं महदुपकारं कृतेभ्यः श्रीविजयध्वजेभ्यः तथा शाब्दब्रह्मणिनिष्ठातेभ्यः श्रीसत्यधर्मतीर्थेभ्यः अत्रत्यप्रमेयमान् छात्रमानसे सम्यक् प्रतिष्ठापितेभ्यः श्रीयादवार्यचट्टिआचार्यप्रभृतिमहामहिमेभ्यः भूयो भूयो नमो नमः ।।

एतादृशविभवोपेतस्य श्रीमद्भागवतपुराणस्य दशमस्कन्धस्य स्वाहाकारपद्धतिपुस्तकस्य प्रकाशनं क्रियते । अधुना मम विद्यागुरूणां

पं.पू. माहुली विद्यासिंहाचार्याणां षष्ठिपूर्तिनिमित्तं अस्य ग्रन्थस्य प्रकाशनं क्रियते ।

उत्तरादिमठाधीशानां श्री १००८ श्री सत्यात्मतीर्थस्वामिपादानां परमानुग्रहभरेण तथा मम विद्यागुरूणां कृपया तथैव सकल विद्वज्जनानां सज्जनानां आशीराशीभिः बदरीक्षेत्रे श्रीमद्भागवतदशमस्कन्धस्य होमः कृतः । तदा अस्य ग्रन्थस्य विरळतां ज्ञात्वा प्रकाशनं कृत्वा सर्वसाधकसज्जनानां अयं ग्रन्थः महोपकारि भवेदिति चिन्तयित्वा अस्मद्गुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गत रुक्मिणीसत्यभामासमेतश्रीकृष्णाय समर्प्यते ।

अधुना प्राचीनपरंपराप्राप्ता पद्मपुराणानुसारिणी श्रीमद्भागवतदशमस्कन्धहवनपद्धतिः प्राक् वे.शा.सं. श्रीबुर्लि राघवेन्द्राचार्यमहोदयेभ्यः प्रकाशनं कृत्वा साधकजनेभ्यः महोपकारं कृतवन्तः तेषां महोपकारं सकार्तज्ञं संस्मरामि ।

अधुना श्रीमद्भागवतदशमस्कन्धहवनपद्धतिः किञ्चित् विशेषांशानान् सङ्कलय्य अस्माभिः ग्रन्थप्रकाशनं क्रियते । अस्य ग्रन्थप्रकाशनार्थं आर्थिकसाहाय्यं कृत्वा अस्माकं प्रकाशनसंस्थायाः महोपकारं कृतेभ्यः अस्माकं मित्रवर्येभ्यः सहाध्यायिनः यलगुरवासिनः पण्डित रमेशाचार्य वामनाचार्य हिप्परगि तथा तेषां अग्रजाः वेदमूर्तिः बिंदाचार्य वामनाचार्य हिप्परगि एतेषां पितृचरणानां वै.वा. वामनाचार्य

बिन्दाचार्य हिप्परगि एषां स्मरणार्थं भगवतः अम्भृणीपतिवेदव्यासस्य तथा श्रीकृष्णस्य परमानुग्रहसमासादनार्थं अनुजाभ्यां श्रीबिंदाचार्येभ्यः तथा पं. रमेशाचार्येभ्यः महोदयेभ्यः तथा तेषां परिवाराय भगवान् रुक्मिणीसत्यभामासमेतश्रीकृष्णः अनुगृह्णात्विति सभक्तिकं प्रार्थये ।।

हृद्यं अनवद्यं प्रबुद्धशैल्यामुद्रणकार्यं कृतवतः बेङ्गलूरुमहानगरस्थ वागर्थमुद्रणालयस्थ सर्वसदस्यान् सकार्तज्ञं प्रणमामि ।

नीरक्षीरविवेकेन तत्र भवन्तः महान्तः अस्मान् अनुगृण्हात्विति विरमामि ।

।। इति शम् ।।

समस्तसज्जनचरणरेणुसेवक

**डा. वेदनिधिआचार्यः विजयपुरम्**

।। रुक्मिणीसत्यभामासमेतश्रीकृष्णो विजयते ।।

## अथ प्रयोगः ।

यजमानः स्नात्वा नित्यकर्म निर्वर्त्य पत्न्या सह आचम्य पवित्रपाणिः प्राणानायम्य श्रीहरिवायुस्मरणपूर्वकं सुमुखश्चेत्यादि देशकालकथनान्ते शुभपुण्यतिथौ भारतीरमणमुख्यप्राणान्तर्गत रुक्मिणीसत्यभामासहित हृषीकेशात्मक मासक्षेत्रमूर्त्यातक अजाद्येकपश्चाशद्वर्णात्मक अनिरुद्धादिचतुर्व्यूहात्मक मत्स्यादि-दशमूर्त्यात्मक केशवादिचतुर्विंशात्मक विश्वविष्ण्वादिसहस्ररूपात्मक श्रीवेणुगोपालकृष्णप्रेरणया श्रीवेणुगोपालकृष्णप्रीत्यर्थं विशेषतः प्रोष्ठपद्यां यथाविहितमासे वा सप्ताहे वा श्रीमद्भागवतपारायण अनुवाद प्रवचनदौ प्रमादात् ज्ञाताज्ञतदोषनिरासार्थं पाद्मकल्पोक्तप्रकारेण अद्यारभ्य पूर्णिमापर्यन्तं अथवा समाप्तिदिनपर्यन्तं श्रीमद् भागवतमहापुराणान्तर्गत दशमस्कन्धस्थ प्रतिश्लोकहवनं प्रत्यहं यथावकाशं स्वयं करिष्ये । वरणीगृहीताचार्यैर्वा कारयिष्ये च ।।

तदंगत्वेन प्रत्यहं विष्णुसहस्रनामपारायणं श्रीमद्भगवद्गीतापारायणं स्वयं वा आचार्यद्वारा वा कारयिष्ये ।।

तत्रादौ निर्विघ्नतासिध्यर्थं श्रीमन्महागणपतिवरुणपूजनादिकृत्वा स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं आचार्यादिऋत्विग् वरणं, (ग्रहयज्ञं) करिष्ये इति सङ्कल्पः ।

यथाविभवं शान्तदान्ततितिक्षाकरुणाभयसंशुद्धिविशेषश्रीमद्भागवत-स्पष्टोच्चारपरान् ज्ञानभक्तिवैराग्यादिसद्गुणसंपन्नान् षोडशाष्टषट्चतुरो वा ऋत्विजो वृत्वा मधुपर्कविधिना गन्धमाल्ययज्ञोपवीतद्वयवस्त्रालङ्कारादिभिः तान् पूजयेत् ।।

ततः आचार्यः यजनदेशे यजमानेन प्राथितोऽहं आचार्यकर्म करिष्ये ।। शरीरशुद्ध्यर्थं पुरुषसूक्तपठनं कुर्यात् । यागारम्भे तत्वन्यासमातृकान्यासांश्च कारयेत् ।

## गौरसर्षपविकिरणम् ।

**यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ।**
**स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ।।**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।**
**सर्वेषामविरोधेन (यज्ञकर्म) पौष्टिकर्म समारभे ।।**

।। इति गौरसर्षपान् विकिरयेत् ।।

## पञ्चगव्यमेलनं कृत्वा

**शुचीवो हव्येति तिसृणां मैत्रावरुणिर्वसिष्ठो मरुतस्त्रिष्टुप् पञ्चगव्यप्रोक्षणे विनियोगः । (ऋ.७/५६/११)**

**शुचीं वो हव्या मरुतः....... पावकः ।। १ ।।**

**अंसेष्वा मरुतः रवादयो वो वक्षः सु रुक्मा उपशिश्रियाणाः ।**

वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ।। २ ।।

प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम् ।
ससस्त्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ।। ३ ।।
इति तृचेन ।

अग्निः शुचिव्रततम इति द्वयोराङ्गिरसो विरूपोग्निर्गायत्री पञ्चगव्यप्रोक्षणे विनियोगः ।

अग्निः शुचिव्रततमः ....... ज्योतींष्यर्चयः ।। २ ।।
(७/४४/२१,२२) (पृ.५११)

एतोन्विन्द्रमिति तिसृणां आङ्गिरसस्तिरश्चि इन्द्रो नुष्टुप्

पञ्चगव्यप्रोक्षणे विनियोगः ।

एतोन्विन्द्रं स्तवाम .......... सिषाससि ।। ३ ।। इति तृचेन । (८/९५/७,८,९/पृ.५५१)

आपो हिष्ठेति तृचस्य आम्बरीषः सिन्धुद्वीप आपो गायत्री शुद्धाद्भिः प्रोक्षणे विनियोगः ।

आपो हिष्ठा ........... जनयथाचनः ।। ३ ।। इति तृचेन । १०/९/१-३

अद्भ्यः सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।

तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिं । मरीचीनां पदमिच्छन्ति वेधसः ।

यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः ।

नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे । ह्रीश्च लक्ष्मीश्च पत्न्यौ । अहो रात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण । इत्युत्तरनारायणेन च अद्भिः प्रोक्षयेत् ।।

ततः मध्ये एकहस्तपरिमितात् द्विहस्तपरिमिताद्वा निर्मितकुण्डात् स्थण्डिताद्वा प्राच्यां चतुरस्रवेद्यां सर्वतोभद्रमण्डलं विरच्य तस्मिन् ब्रह्मादिमण्डलदेवता आवाह्य अधिवासयेत् । तदुपरि चक्राब्जमण्डल यन्त्रे महीद्यौरित्यादिविधिना कलशं संस्थाप्य तत्र वरुणमावाह्य पुष्पाञ्जल्यन्ताः पूजां समाप्य प्रार्थयेत् । कलशे पूर्णपात्रोपरि रुक्मिणीसत्यभामासमेत हृषीकेशात्मकश्रीवेणुगोपालकृष्णमूर्ति-सालिग्रामसहितां प्रतिष्ठापयेत् ।।

कुण्डमण्डपकरणपक्षे यागमण्डपमध्ये तत्पश्चिमदेशे वा होमार्थं यजमानहस्तात् उक्तसङ्ख्यापरिमितं चतुरस्रं सयोनिं त्रिमेखलं कुण्डं निर्माय तत्पूर्वतः यजमानहस्तैकमितं तद्वदुच्छ्रयां देवताकलशस्थापनार्थं वेदिं विरच्य तथा नैरुत्यां वास्तुवेदिं च विरचयेत् ।

पञ्चरात्राद्यागमद्युक्तां संक्षिप्तमण्टपपूजां कुर्यात् । यदि यथोक्त मण्टपाभावे मण्टपपूजा न विधेया ।

**स्थापनाक्रमः ।**

तद्यथा अद्यपूर्वोच्चरित एवं गुण विशेषणविशिष्ट इत्यादि .......... शुभतिथौ .......... भारतीरमणमुख्यप्राणान्तर्गत रुक्मिणीसत्यभामासमेत हृषीकेशात्मक श्रीवेणुगोपालकृष्णस्थापनं करिष्ये । इति संकल्प यथासुवर्णनिर्मितां अग्न्युत्तारितां श्रीकृष्णप्रतिमां 'इदं विष्णु'रिति मन्त्रेण संस्थापयेत् ।

भगवतो वीर्येण भगवतो बलेन भगवतस्तेजसा भगवतः कर्मणा भगवता श्रीकृष्णेन प्रेरितोऽहं भगवतः श्रीकृष्णस्य यथाज्ञानेन यथामिलितोपचारद्रव्यैः पुरुषसूक्तविधानेन ध्यानावाहनादि षोडशोपचारपूजां यथाविभवं करिष्ये ॥

ततः करशुद्धिं पापपुरुषशेषदाहं तत्वन्यासमातृकान्यासांश्च कृत्वा भगवत्पूजाङ्गभूलमन्त्रं जप्त्वा देवं प्रार्थयेत् ।

'निषुसीद गणपते गणेषु त्वा माहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किं च नारे महामर्कं मंघवं चित्रमर्च ।।
(१०/११२/९/पृ. ७२९)

आराध्यसे प्राणभृतां प्रणेत्रा प्राणाधिनाथेन समीरणेन ।
नारायण ज्ञानसुखैकपूर्ण स्वामिन् मयि श्रीरमणप्रसीद ।।
बिम्बोसि प्रतिबिम्बोस्मि तव यद्यपि चान्तरम् ।
स्वामिन् निर्दोष मद्दोषान् विरेचय नमोस्तु ते ।।
इति सम्प्रार्थयेत् ।।

भगवत्पूजाङ्गत्वेन कलशार्चनं करिष्ये ।

कुम्भचतुर्दिक्षु गन्धाक्षतादिभिरलङ्कृत्य हस्तेन स्पृष्ट्वा

'इमं मे' गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचता परुष्ण्या ।
आसिक्न्या मरुद् वृधे वितस्तयाऽऽर्जीकीये श्रुणुह्या सुषोमया ।। (१०/७५/५/पृ.६९०)

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।।
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदो सामवेदो ह्यथर्वणः ।।

अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।।
आयान्तु देवपूजार्थं अभिषेकार्थमादरात् ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ।।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।
एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः ।
आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ।।
कोलो नृसिंहश्चवटुर्जामदग्न्यरघूद्वहौ ।
वासिष्ठयादवौ कृष्णौ आत्रेयौ बुद्धकल्किनौ ।।
शिंशुमारश्चेति शतं कलाः कलशदेवताः ।
आहूय पूजयेदेता स्नानीयकलशे बुधः ।।

कलशे अजादिदेवताभ्यो नमः । ताक्ष्र्यादिमुद्रां प्रदर्श्य ।। नमो नारायणायेति द्वादशवारं जप्त्वा । नमो नारायणाय विद्महे वासुदेवाय धीमहि । तं नो विष्णुः प्रचोदयात् । इत्यभिमन्त्र्य कलशं प्रार्थनां कुर्यात् ।

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ।
योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ।।
सर्वक्षेत्रमयो यस्मात् सर्वदेवमयो यतः ।
अतो हरिप्रियोऽसि त्वं पूर्णकुम्भ नमोऽस्तु ते ।।

## अथशङ्खपूजा

पूर्णकुम्भोदकेन शङ्खमापूर्य तुलसीपुष्पाणि निधाय षण्मुद्राः प्रदर्श्य हस्तेन स्पृष्ट्वा मन्त्रान् पठेत् ।

**त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।**
**नमितः सर्वदेवश्च पाञ्चन्य नमोऽस्तु ते ।।**
**नत्वा शङ्खं करे धृत्वा मन्त्रेणानेन वैष्णवः ।**
**यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम् ।।**
**शङ्खं चन्द्रार्कदैवत्यं मध्ये वरुणदैवतम् ।**
**पृष्ठे प्रजापतिं विंद्यादग्रे गङ्गा सरस्वती ।।**
**त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।**
**शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छंखं प्रपूजयेत् ।।**

ॐ नमो नारायणाय ॐ । ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तं नो शङ्खः प्रचोदयात् ।। इति शङ्खपूजा ।।

## पञ्चपात्रपूजा

पञ्चपात्राण्यासादयेत् । अर्घ्यं वायुपदे प्रोक्तं नैरुत्यां पाद्यमेव च । ईशेत्वाचमनीयं च स्नानीयं चाग्निकोणके ।। मध्ये द्वे सर्वपात्राणां शुद्धतोयेन पूरयेत् । एकं स्यान्मधुपर्केन्यत्पुनराचमने तथा । निक्षिपेद गन्धतुलसीपुष्पादीनि यथाविधि । तुलसीदलयुक्तेन शङ्खतोयेन पूजकः । पूजाद्रव्याणि सर्वाणि प्रोक्ष्य पीठं प्रपूजयेत् । तुलसीदलानि निक्षिप्य धेनुमुद्रां प्रदर्शयेत् ।

## अथ पञ्चामृतम्

**दुग्धे तु देवो गोविन्दो दधिवामनदैवतम् ।**
**आज्यं च विष्णुदैवत्यं मधौ च मधुसूदनम् ।।**

शर्कराचाच्युतं विंद्यात् ताः पञ्चामृतदेवताः । कलशे । एवं क्षीरादौ गोविन्दादि भगवद्रूपान् क्रमेणावाह्य पञ्चामृतदेवताभ्यो नमः । क्षीरादिपञ्चामृतपदार्थेषु तुलसीदलानि निक्षिप्य धेनुमुद्रां प्रतादर्श्य । मूलमन्त्रेणाभिमन्त्र्य नमस्कृत्य विष्णुगायत्र्याभिमन्त्रयेत् ।

## अथ पीठपूजा

ॐ परदेवतायै श्रीलक्ष्मीनारायणाय नमः इति आरभ्य महापीठाय ते नमः इत्यन्तं पीठं पूजयेत् ।

## अथ प्रतिमायां बिम्बावाहनम्

### हृत्कमलविकासः

ततः अधोमुखं हृत्कमलं ॐ यं ॐ इति वायुबीजेन अभिमुखं कृत्वा प्रणवेन उन्मुखं कृत्वा ज्ञानार्केण विकासयेत् हृत्कमले नारायणं ध्यायेत् ।

### बिम्बरूपध्यानम्

**उद्यद्भास्वत्समाभासः चिदानन्दैकदेहवान् ।**
**शङ्खचक्रगदापद्मधरो ध्येयोऽहमीश्वरः ।।**

लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।।
सेव्यमानोऽधिकं भक्त्या नित्यनिः शेषशक्तिमान् ।।

हृदयस्थभगवद्रूपवर्णनम्

हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः ।
जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः ।।
हृत्कर्णिकामूलगतः सोङ्गुष्ठाग्रप्रमाणकः ।
मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः ।।
अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा ।।
सोऽयं त्रिरूपो भगवान् हृदयाख्यः प्रकीर्तितः ।
हृदिस्था या हरेर्मूर्तिः जीवो यत्प्रतिबिम्बकः ।
यद्वशे वर्तते जीवः सा तु जीवकला स्मृता ।।
एवं प्रकारेण बिम्बरूपिनारायणं ध्यायेत् ।

बिम्बावाहनम्

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।
दोर्भिर्दधानमजितं सरसं च भैष्मी
सत्यासमेतमखिलप्रदमिन्दिरेशम् ।।-इति ध्यात्वा ।

आत्मेत्यस्य वातायनो वासुदेवस्त्रिष्टुप् स्वबिम्बमूर्त्यावाहने विनियोगः ।

**आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः । घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ।। (१०/१६८/४ पृ.७५९)**

इति मन्त्रं सहस्रशीर्षेति च ऋचं तथा मूलमन्त्रं चोच्चार्य हृत्पद्माधिष्ठितं **श्रीकृ**ष्णं तुलसीपुष्पाणि गृहीत्वा ध्यायेत् ।

एहि मम हृत्कमलस्थित तत्वदेवतान्तर्गत बिम्बरूपिन् लक्ष्मी-नारायण पीठस्थित एतत् श्रीकृष्णप्रतिमान्तःस्थिततेजः सार-प्रतिमान्तःस्थित श्रीमुख्यप्राणरूपप्रतिमान्तर्गतरमारूपचिन्मयप्रतिमायां मदन्तर्यामिणं मन्नियामकं मदाकारं मदाश्रयं मदाधारं मदुत्पादकं मत्पालकं मत्संहारकं मत्प्रेरकं मन्निवर्तकं मत्सत्ताप्रदं मदीयदोषातिदूरं मदत्यन्तविलक्षणं मदचिन्त्यं मदुत्तमं नारायणं त्वां आवाहयामि आवाहयामि इति द्विरुच्चार्य आवाहनमुद्रया श्रीकृष्णमावाहयेत् ।।

(एह्येहि मम हृत्पद्मस्थितश्रीकृष्ण सुषुम्ना मार्गेण ब्रह्मरन्ध्रं प्रविष्य वामनासापुटद्वारा बहिरागत्य अञ्जलिस्थ तुलसीपुष्पेषु श्रीकृष्णमागतं भावयेत् ।)

**तुलसीपुष्पाणि पीठस्थ श्रीकृष्णप्रतिमायाः पादयोः समर्पयेत् ।।**

**आवाहयामि पीठे त्वां प्रतिमायां रमापते ।**
**भो स्वामिन् जगतां नाथ यावत्पूजावसानकम् ।**
**तावत् सम्प्रीति भावेन बिम्बेऽस्मिन् सन्निधो भव ।।**

मम हृत्पद्मस्थित भारतीरमणमुख्यप्राणान्तर्गत रुक्मिणीसत्यभामा-समेत श्रीवेणुगोपालकृष्ण आवाहितो भव । सन्निहितो भव । सन्निरुद्धो भव । सम्मुखो भव । वरदो भव । शान्तो भव । सुप्रसन्नो भव । प्रसीद प्रसीद ।।

**सान्निध्यं कुरूदेवेश सर्वसम्पत्करो भव । त्वां भक्त्या पूजयाम्यश्च भोगैरध्यादिभिः क्रमात् विभो सकललोकेश कृष्ण विष्णो हरे प्रभो ।।**

**यागावसानपर्यन्तं अत्रस्थित्वा जनार्दन ।**
**भक्तस्य मम पूजां च गृहीत्वा पाहि मां विभो ।।**
**इति प्रार्थना ।**

ततः श्रीकृष्णप्रतिमायां मातृकान्यासं तत्वन्यासं च कृत्वा मूलमन्त्रं अष्टोत्तरशतवारं (१०८) जपेत् । इति बिम्बावाहनम् ।।

**श्रीकृष्ण एहि स्नानार्थं मज्जनालयं प्रति आगच्छेति विज्ञापयेत् ।**
**ॐ इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ।। (१/२२/१७ पृ.११)**

इति मन्त्रेण पादुके दत्वा ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवान् संस्तनूभिर्व्यशेम देवहितं यदायुः ।।
(१/८९/८ पृ.६१)

इति मन्त्रेण देवं स्नानपीठे संस्थाप्य

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ।। १ ।।
(१०/९०/१, पृ.७०६)

इति मन्त्रेण श्रीकृष्णप्रतिमायां श्रीकृष्णावाहनं समर्पयामि ।

ॐ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।। २ ।।

श्रीकृष्णाय नमः आसनं समर्पयामि ।।

ॐ एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।। ३ ।।

श्रीकृष्णायनमः सरस्वतीहस्तेन पाद्यं समर्पयामि ।।

ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहा भवत् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ।। ४ ।।

श्रीकृष्णाय नमः रतिहस्तेन अर्घ्यं समर्पयामि ।।

ॐ तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ।। ५ ।।

श्रीकृष्णाय नमः आचमनीयं समर्पयामि ।।

ॐ यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्या सीदाज्यं ग्रीष्म इध्मः शरद्धविः ।।

श्रीकृष्णाय नमः मलापकर्षण स्नानं समर्पयेत् ।

अथ पञ्चामृतस्नानम्

ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ।।

श्रीकृष्णाय नमः पयःस्नानं समर्पयामि । पयःस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि ।

ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ।।

श्रीकृष्णय नमः दधिस्नानं समर्पयामि । दधिस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि ।

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभं वक्षि हव्यम् ।।

श्रीकृष्णाय नमः घृतस्नानं समर्पयामि । घृतस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि । इति प्रार्तना ।

**ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।। (०१/९०/६,७,८, पृ.६२)**

श्रीकृष्णाय नमः मधुस्नानं समर्पयामि । मधुस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि ।

**ॐ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतु नाम्ने । स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ।।**
**(०९/८५/६ पृ.५९९)**

श्रीकृष्णाय नमः शर्करास्नानं समर्पयामि । शर्करास्नानानन्तरं शुद्धोदकस्नानं समर्पयामि । स्नानानन्तरं आचमनीयं समर्पयामि ।

**ॐ याः फलिनीर्या अफला याश्च पुष्पिणीः ।**
**बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ।।**
**(१०/९७/१५ पृ.७१५)**

श्रीकृष्णाय नमः फलस्नानं समर्पयामि ।

फलस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि ।
स्नानानन्तरं आचमनीयं समर्पयामि । इति पञ्चामृतस्नानम् ।

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम् ।।**

श्रीकृष्णाय नमः गन्धोदकस्नानं समर्पयामि ।
गन्धोदकस्नानानन्तरं शुद्धोदकस्नानं समर्पयामि ।
स्नानानन्तरं शुद्धोदकसमर्पयामि ।

**अथ शुद्धोदकस्नानम्**

**पुरुषसूक्तेन शुद्धोदकस्नानं समर्पयामि ।**
**ॐ सहस्रशीर्षा पुरुष ....... साध्याः सन्ति देवाः ।।**
**ॐ अतो देवा ........ यत्परमं पदम् ।। (०१/२२/१६-११ पृ....)**

ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि । बलाय श्रियै यशसेन्नाद्याय । ॐ भूर्भुवस्वः अमृताभिषेकोस्तु । श्रीकृष्णाय नमः महाभिषेकस्नानं समर्पयामि ।। स्नानानन्तरं पितामहहस्तेन आचमनीयं समर्पयामि ।

**ॐ तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु**

शस्तम् । अशीमहीं गाधमुतप्रतिष्ठां नमो दिवे बृहते सादनाय ।
ॐ गृहावै प्रतिष्ठासूक्तं ........... प्रतिष्ठा प्रतिष्ठा ।
(५/४७/७ पृ.३११)

ॐ नर्यप्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् । सुप्रतिष्ठितमस्तु । ॐ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं ........ ऋषयश्चये ।

ॐ अभिवस्त्रा सुवसनान्यर्षाऽभि धेनूः 'सुदुघाः पूयमाना । अभि चन्द्रा भर्तवे नो हिरण्याभ्यऽश्वान् रथिनो देव सोम ।।

श्रीकृष्णाय नमः वस्त्रं समर्पयामि ।
वस्त्रोपवस्त्रार्थे तुलसीपत्रं समर्पयामि ।

ॐ तस्माद्यज्ञात्सर्वहुतः ......... सम्भृतं ..... श्चये ।

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।

श्रीकृष्णाय नमः यज्ञोपवीतं समर्पयामि ।
(यज्ञोपवीतार्थे तुलसीपत्रं समर्पयामि) ।

(अभिषेकात् पुरा वापि पश्चाद्वा परमात्मनि इत्युक्तप्रकारेण आदौ प्रतिमायां मातृकान्यासः कार्यः इति क्रमः ।) ॐ तत्स्माद्यज्ञा-त्सर्वहुतऋचः......यत ।

**अक्षतांश्च सुशुक्लांश्च राजशाल्युद्भवांश्च तान् ।**
**जीवितानि च भूतानां चार्पयामि तव प्रभो ।।**

श्रीकृष्णाय नम इत्यक्षतान् समर्पयामि ।

स गन्धद्वारां ........ श्रियम् । श्रीकृष्णायनम इति गन्धं समर्पयामि ।

**तस्मादश्वा अजायन्तः ....... अजावयः ।**

**ॐ आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः ।**
**हृद्राश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ।।**

**माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।**
**मया हृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।।**

**सेवन्तिकाबकुलचम्पकपाटलाब्जैः**
**पुन्नागजातिकरवीररसालपुष्पैः ।**
**बिल्वप्रवालतुलसीदलमालतीभिः**
**त्वां पूजयामि जगदीश्वर मे प्रसीद ।।**

श्रीकृष्णाय नमः नानाविधपरिमळपुष्पाणि समर्पयामि ।।

केशवादिचतुर्विंशतिनामभिः, मत्स्यादिदशनामभिः, विश्वादि-सहस्रनामभिः अजितादि अनन्तनामभिः श्रीकृष्णाष्टोत्तरशतनामभिः तुलसीदलान्यर्पयेत् ।।

## अथ आवरणपूजा

मध्ये ॐ परमपुरुषायनमः । वामे सलक्ष्म्यै नमः । दक्षिणे धरायै नमः ।। पीठाद्बहिः पूर्वादिदिक्षु ॐ क्रुद्धोल्काय नमः । ॐ महोल्कायनमः । ॐ वीरोल्कायनमः । ॐ द्युल्काय नमः । ॐ सहस्रोल्काय नमः ।। इति प्रथमावरणम् ।

तद्बहिः पूर्वादिदिक्षु– ॐ वासुदेवाय नमः । ॐ संकर्षणाय नमः । ॐ प्रद्युम्नाय नमः । ॐ अनिरुद्धाय नमः ।।

आग्नेयादिचतुष्कोणेषु – ॐ मायायै नमः । ॐ जयायै नमः । ॐ कृत्यै नमः । ॐ शान्त्यै नमः इति द्वितीयावरणम् ।।

पूर्वे ॐ केशवाय नमः । ॐ नारायणाय नमः । आग्नेये ॐ माधवाय नमः । दक्षिणे ॐ गोविन्दाय नमः ॐ विष्णवे नमः । नैऋत्ये ॐ मधुसूदनाय नमः । पश्चिमे ॐ त्रिविक्रमाय नमः । ॐ वामनाय नमः । वायव्ये ॐ श्रीधरायनमः । उत्तरे ॐ हृषीकेशाय नमः । ॐ पद्मनाभाय नमः । ऐशान्ये ॐ दामोदराय नमः इति तृतीयावरणम् ।।

तद्बहिः पूर्वे ॐ संकर्षणाय नमः । ॐ वासुदेवाय नमः ।। आग्नेये ॐ प्रद्युम्नाय नमः । दक्षिणे ॐ अनिरुद्धाय नमः । पुरुषोत्तमाय नमः ।। नैऋत्ये ॐ अधोक्षजाय नमः । पश्चिमे ॐ

नारसिंहाय नमः । ॐ अच्युताय नमः । वायव्ये ॐ जनार्दनाय नमः । उत्तरे ॐ उपेन्द्राय नमः । ॐ हरये नमः ।। ऐशान्ये ॐ श्रीकृष्णाय नमः इति चतुर्थावरणम् ।।

तद्बहिः पूर्वे ॐ मत्स्याय नमः । ॐ कूर्माय नमः । आग्नेये ॐ वराहाय नमः । दक्षिणे ॐ नारसिंहाय नमः । ॐ वामनाय नमः । नैर्ऋत्ये ॐ परशुरामाय नमः । पश्चिमे ॐ रामाय नमः । ॐ कृष्णाय नमः । वायुव्ये ॐ बुद्धाय नमः । उत्तरे ॐ कल्किने नमः । ॐ अनन्ताय नमः । ऐशान्ये ॐ विश्वरूपाय नमः ।। इति पञ्चमावरणम् ।।

तद्बहिः पूर्वादिक्षु ॐ अनन्ताय नमः ।। ॐ ब्रह्मणे नमः । ॐ वायवे नमः । ॐ ईशानाय नमः ।। देवस्याग्रे ॐ गरुडाय नमः । आग्नेयादिक्षु ॐ वारुण्यै नमः । ॐ सरस्वत्यै नमः । ॐ भारत्यै नमः । ॐ गिरिजायै नमः । गरुडस्य वामे – ॐ सौपर्ण्यै नमः ।। इति षष्ठावरणम् ।।

पूर्वे तद्बहिः पूर्वदिशि ॐ लं इन्द्राय सुराधिपतये सायुधाय सवाहनाय सपरिग्रहाय शचिसहिताय विष्णुपार्षदायनमः ।।

आग्नेय्याम् – ॐ रं अग्नये तेजोधिपतये रक्तवर्णाय शक्तिहस्ताय मेषवाहनाय स्वाहासहिताय विष्णुपार्षदाय नमः ।।

दक्षिणस्यां दिशि – ॐ यं यमाय प्रेताधिपतये कृष्णवर्णाय दण्डहस्ताय महिषवाहनाय श्यामलासहिताय विष्णुपार्षदाय नमः ।।

नैर्ऋत्याम् – ॐ क्षं निर्ऋतये रक्षोधिपतये धूर्मवर्णाय खड्गहस्ताय प्रेतवाहनाय कालिकासहिताय विष्णुपार्षदाय नमः ।।

पश्चिमे – ॐ वं वरुणाय जलाधिपतये शुभ्रवर्णाय पाशहस्ताय मकरवाहनाय गङ्गासहिताय विष्णुपार्षदाय नमः ।।

वायव्ये – ॐ यं वायवे प्राणाधिपतये धूर्मवर्णाय अङ्कुशहस्ताय मृगवाहनाय वायवी (मोहिनी) सहिताय विष्णुपार्षदाय नमः ।।

उत्तरस्याम् – ॐ सं सोमाय नक्षत्राधिपतये शुक्लवर्णाय गदाहस्ताय तुरगवाहनाय रोहिणीसहिताय विष्णुपार्षदाय नमः ।।

ईशान्याम् – ॐ हां ईशानाय विद्याधिपतये स्वच्छवर्णाय शूलहस्ताय वृषभवाहनाय पार्वतीसहिताय विष्णुपार्षदाय नमः ।।

निर्ऋतिवरुणमद्ये (अधो वा) – ॐ शं शेषाय नागाधिपतये गौरवर्णाय चक्रहस्ताय कूर्मवाहनाय वारुणीसहिताय विष्णुपार्षदाय नमः ।।

इन्द्रेशानयोर्मध्ये ऊर्ध्वं वा – ॐ ह्रीं ब्रह्मणे सत्यादि-सर्वलोकाधिपतये पद्महस्ताय हंसवाहनाय सरस्वतीसहिताय विष्णुपार्षदायनमः ।। इति आवरणपूजा ।

ॐ यत्पुरुषं व्यदधुः ............
वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।

श्रीकृष्णाय नमः धूपं समर्पयामि ।।
स ब्राह्मणोस्यमुख........
साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ।।
भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ।
त्राहि मां नरकाद् घोरात् दिव्यज्योतिर्नमोस्तु ते ।।

श्रीकृष्णाय नमः दीपं समर्पयामि ।

चन्द्रमा मनसो जातः ......... भगवतः नैवेद्यकाले द्वादशस्तोत्रं पठेत् ।

ॐ वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ।। इत्यादिकं पठेत् ।

कुम्भोदकेन शङ्खमापूर्य तुलसीदलं निधाय ।
मूलमन्त्रेणाभिमन्त्र्य व्याहृत्या गायत्रीमन्त्रेण नैवेद्यं परिप्रोक्ष्य ।।

सौवर्णैःस्थालिवर्यैर्मणिगणखचितैः गोघृताक्तान् सुपक्वान्
भक्ष्यान् भोज्यांश्च लेह्यानपि परममहच्चोष्यमन्नं निधाय ।
नानाशाकैरुपेतं दधि मधु सुघृतंक्षीरपानीययुक्तं
ताम्बूलं चापि विष्णोः प्रतिदिवसमहं मानसे चिन्तयामि ।।

इति मूलमन्त्रेण नारायणाय सत्यन्त्वर्तेन परिषिञ्चामि । इति जलेन नैवेद्यं परिषिञ्चेत् ।

**महालक्ष्म्या सुधारूपं करे ते दक्षिणेऽनघ ।**
**आपोशनं दीयमानं पिब देव रमापते ॥**
**सुधारसं सुविपुलं आपोशनमिदं तव ।**
**गृहाण त्वं सुरश्रेष्ठ यथेष्टमुपभुज्यताम् ॥**

इति मन्त्रमुदीर्य अमृतोपस्तरणमसि स्वाहा इति वदन् देवस्य दक्षिणहस्ते जलं क्षिपामि इत्यनुसन्धाय पात्रान्तरे जलं निक्षिपेत् ।

**ॐ प्राणात्मने नारायणाय स्वाहा ।**
**ॐ अपानात्मने वासुदेवाय स्वाहा ।**
**ॐ व्यानात्मने संकर्षणाय स्वाहा ।**
**ॐ उदानात्मने प्रद्युम्नाय स्वाहा ।**
**ॐ समानात्मने अनिरुद्धाय स्वाहा ।**

ब्रह्मणे स्वाहा इति प्रत्याहुतिं उदकं शङ्खेन पात्रे निक्षिपेत् नैवेद्यमनिरीक्ष्यमाणः अष्टोत्तरशतवारं (१०८) मूलमन्त्रं जपेत् । श्रीकृष्णाय नमः नैवेद्यं समर्पयामि मध्ये मध्ये पानीयं समर्पयामि । अमृतापिधानमसि स्वाहा इति उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनं समर्पयामि । मुखप्रक्षालनं समर्पयामि ।

चन्दनं च सकर्पूरं कस्तूर्यादि समन्वितम् ।
करोद्वर्तनकं देव प्रीत्यर्थं प्रतिगृह्यताम् ।।

इति करोद्वर्तनार्थे चन्दनं समर्पयामि ।

ॐ नाभ्यामासीदन्तरिक्षं ......
पूगीफलं सकर्पूरं नागापर्णसमन्वितम् ।
गृहाण चूर्णसंयुक्तं ताम्बूलं सुमनोहरम् ।।

श्रीकृष्णाय नमः मुखसुवासार्थे ताम्बूलं समर्पयामि ।

श्रीकृष्णाय नमः सुवर्णपुष्पदक्षिणां समर्पयामि ।

ॐ सप्तास्यासन् ......... पशुम् ।

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदं अतः शान्तिं प्रयच्छ मे ।।

श्रीकृष्णाय नमः सुवर्णपुष्पाञ्जलिं समर्पयामि ।

इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सकलावप्तिः भवेज्जन्मनि जन्मनि ।।

श्रीकृष्णाय नमः महाफलं समर्पयामि ।।

ॐ अर्चत प्रार्चत प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरं न धृष्णवर्चत ।।

(८/६९/०८ पृ.५३३)

**ॐ श्रिये जातः श्रिय आ निरीयाय**
**श्रियं वयो जरितृभ्यो दधाति ।**
**श्रियं वसाना अमृतत्व मायन्**
**भवन्ति सत्या समिथा मितद्रौ ।। (९/९४/४ पृ.६०७)**

श्रिय एवैनं तच्छ्रियमादधाति सन्ततमृचावषट्कृत्यं सन्तत्यै सन्धीयते प्रजया पशुभिर्य एवं वेद ।।

**जयत्यजोऽखण्डगुणोरुमण्डलः सदोदितो ज्ञानमरीचिमाली ।**
**स्वभक्तहार्दोचतमोनिहन्ता व्यासावतारो हरिरात्मभास्करः ।।**

**जयत्यजो क्षीणसुखात्मबिम्बः स्वैश्वर्यकान्तिप्रततः सदोदितः ।**
**स्वभक्तसन्तापदुरिष्टहन्ता रामावतारो हरिरीशचन्द्रमाः ।।**
**जयत्यसङ्ख्योरुबलाम्बुपूरो गुणोच्चरत्नाकर आत्मवैभवः ।**
**सदा सदात्मज्ञनदीभिराप्यः कृष्णावतारो हरिरेकसागरः ।।**

श्रीकृष्णायनमः महानीराजनं समर्पयामि ।। कर्पूरार्तिक्यदीपं दर्शयामि ।

**नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**
**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ।।**

श्रीकृष्णाय नमः नमस्कारान् समर्पयामि ।।

**एकोऽपि कृष्णस्य कृतप्रणामः दशाश्वमेधावभृतेन तुल्यः ।**
**दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ।।**

इत्यनुसन्धानपूर्वकं श्रीकृष्णाय नमस्कुर्यात् ॥

**यानि कानि च पापानि जन्मान्तरकृतानि च ।**
**तानि तानि विनष्यन्ति प्रदक्षिणपदे पदे ॥**

श्रीकृष्णाय नमः प्रदक्षिणान् समर्पयामि ।

**ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**
**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥**

**ॐ नमो महद्भ्यो नमो नमो**
**अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।**
**यजाम देवान् यदि शक्नवाम मा**
**ज्यायसः शंसमा वृक्षि देवाः ॥ (१/२७/१३ पृ.१५)**

राजाधिराजाय प्रसह्य ....... सभासद इति । ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।

**तासामाविरभूत् शौरिः स्मयमानमुखाम्बुजः ।**
**पीताम्बरधरस्स्रग्वी साक्षान्मथमन्मथः ॥**

इति श्रीकृष्णाय नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ।

**आवाहनं न जानामि न जानामि विसर्जनम् ।**
**पूजां चैव न जानामि क्षमस्व पुरुषोत्तम ॥**

**अपराधसहस्राणि क्रियन्तेऽहर्निशं यतः ।**
**तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ।।**

इति श्रीकृष्णं सम्प्रार्थयेत् ।

**अथस्थालीपाकप्रयोगः ।**

ततः यागदेशे कुण्डात् स्थण्डिलाद्वा पश्चिमतः आचार्यः उपविष्य आचम्य प्राणानायम्य अद्येत्यादि शुभतिथौ ........ भारतीरमण-मुख्यप्राणान्तर्गत श्रीकृष्णप्रीत्यर्थ श्रीमद्भागवतान्तर्गव दशमस्कन्ध-हवनाङ्गभूतं (कुण्ड) स्थण्डिलोल्लेपनोल्लेखनादिकर्म करिष्ये ।

तद्गोमयेन प्रदक्षिणमुपलिप्यदक्षिणे अष्टौ उदीच्यां द्वे प्रतीच्यां चतुः प्राच्यामर्धं इत्यङ्गुलानि त्यक्त्वा दक्षिणोपक्रमादुदक्संस्थां प्राशमात्रां एकां रेखामुल्लिख्य तस्याः दक्षिणोत्तरयोः प्रागायते प्रादेशसम्मिते द्वे रेखे लिखित्वा तयोर्मध्ये परस्परं असंसृष्टाः प्रागायताः प्रादेशसम्मिताः तिस्रः इति षड् लेखाः यज्ञीयशकलमूलेन दक्षिणहस्तेन उल्लिख्य रेखासु तच्छकलमुदगग्रं निधाय स्थण्डिलमद्भिरभ्युक्ष्य शकलं भङ्क्त्वा आग्नेय्यां निरस्य पाणिं प्रक्षाल्य वाग्यतो भवेत् ।

मौनविषये स्मृत्यन्तरम्–

**स्नास्यतो वरुणः कान्तिं जुह्वतोऽग्निः श्रियं हरेत् ।**
**अश्नतो मृत्युरायुष्यं तस्मान्मौनं त्रिषुस्मृतम् ।।**

(प्र.पा. पृ.३०)

कुण्डे स्थण्डिले वा ॐ स्वाहायै नमः स्वाहां आवाहयामि । ॐ भारत्यै नमः भारतीं आवाहयामि ।।

ॐ श्री ऋतुस्नातां हरिणीरूपिणीं लक्ष्मीमनुसन्धाय ।

**स्वभर्तृसंस्थितामङ्के देवानां हव्यवाहिनीम् ।**
**रक्तवर्णां रक्तवस्त्रां ध्यायेज्वलनसुन्दरीम् ।**

इति स्वाहां ध्यात्वा तत्रैव तदन्तस्थ भारत्यै नमः भारतीं ध्यायामि ।

**उद्यद्दिवाकरसमूहनिभां स्वभर्तृरंकस्थितामभयसद्वरबाहुयुग्माम् ।**
**मुद्रां च तत्वदृषये वरपुस्तकं च दोर्युग्मकेन दधतीं**
**स्मरतात्मविद्याम् ।।**

इति भारतीं ध्यात्वा तदन्तस्थलक्ष्मीं ध्यायेत् ।

**कौशेयरक्तवसनां अरविन्दनेत्रां**
**पाशाङ्कुशाङ्कुभयवरोद्यतपद्महस्ताम् ।**
**उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां**
**ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ।।**

ततः तैजसेनासम्भवे मृण्मयेन वा पात्रयुग्मेन सम्पुटीकृत्य सुवासिन्या श्रोत्रियागारात् स्वगृहाद्वा समृद्धं निर्धूममग्निं आहृत्य स्थण्डिलादाग्नेय्यां निधाय ।

तत्र अग्नौ विशेषमाह भगवान् – निर्मथ्य यज्ञियात् काष्ठादानीतं वा द्विजालयात् इति ।

सिद्धान्तशेखरेपि उत्तमोऽरणिजज्योऽग्निरुत्तमः । सूर्यकान्तिजः । उत्तमः श्रोत्रियागारात् मध्यमः स्वगृहादिजः । (नृ.प्र.पा. पृ.३०)

जुष्टोदमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् एह्यग्ने राहुगणो गौतमोऽग्निस्त्रिष्टुप् अग्न्यावाहने विनियोगः ।

**जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ।। (५/१४/५ पृ.२८२)**

**एह्यग्न इह होता नि षीदादब्धः सुपुर एता भवा नः । अवतां त्वारोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ।।**

इत्यक्षतैरावाह्य आच्छादनं दूरीकृत्य, समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती अग्निं प्रतिष्ठापने विनियोगः ।

ॐ भूर्भुवस्वरों विष्णुवीर्यात्मकं बलवर्धननामानमग्निं प्रतिष्ठापयामि इत्यग्निं प्रतिष्ठाप्य पात्रे आक्षतोदकं प्रास्य प्रोक्षितेन्धनचन्दन-तुलसीकाष्ठसुगन्धद्रव्याणि च निक्षिप्य ।

अद्येत्यादि....... शुभतिथौ आदित्यादिनवग्रहान्तर्ग्रत भारतीरमणमुख्यप्राणान्तर्गत श्रीलक्ष्मीनृसिंहाभिन्नश्रीशिशुमारप्रीत्यर्थं श्रीमद्भागवतदशमस्कन्धहवनाङ्ग आदित्यादिनवग्रहदेवतास्थापनं पूजनं च करिष्ये । इति सङ्कल्प्य अग्नेरैशान्यां वस्त्रे धान्ये वा नवग्रहमण्डलं कुङ्कुमादिभि लिखेत् ।

अत्र ऋषिच्छन्दोदेवताविचारः प्रसङ्गात् क्रियते ।

केचन ऋषिच्छन्दोदेवताकथनसमये फकिकायां आदौ ऋषिं ततो देवतां अन्ते छन्दः कथयेदिति मन्यन्ते । परं श्रीमदानन्दतीर्थ-भगवत्पादाचार्याः ऋग्भाष्ये 'ऋषिच्छन्दोदेवतानि ज्ञात्वार्थं चैव भक्तितीर्थः । स्वाध्यायेनैव मोक्षः स्यात् विरक्तस्य हरिस्मृतेः ।।' इति १ ऋषिः २ छन्दः ३ देवता क्रमेण स्वाध्यायहोमजपतर्पणादौ पठेदिति उक्तवन्तः ।।

बृहद्देवतायां शौनकाचार्यः नियमोऽयं जपे होमे ऋषिश्छन्दो दैवतम् ।

अन्यथा चेत्प्रयुञ्जानस्तत्फलं चात्र हीयते ।। १३४ ।।

ऋषिं तु प्रथमं ब्रूयात् छन्दस्तु तदनन्तरम् ।
देवतामथमन्त्राणां कर्मस्वेवमिति श्रुतिः ।। १३८ ।। पृ.२७६ ।

आचार्यखण्डे गृह्याधानप्रस्तावे–

**ऋषिश्छन्दोदैवतं च विनियोगमनुक्रमात् । इति ।**

रामवाजपेय्यां गृह्यकारकेऽपि–

**ऋषिमादौ प्रयुञ्जीत छन्दो मध्ये प्रयोजयेत् ।**
**देवतामवसाने च मन्त्रज्ञो मन्त्रसिद्धये ॥**

इत्यादिप्रमाणबलात् क्रमशः ऋषिः छन्दः देवतां च उच्चार्य स्वाध्यायजपहोमतर्पणादिकं विधेयमिति अवश्यं ज्ञेयम् ।

सर्वतोभद्रमण्डलदेवतावाहनम् ।

तत्रादौ पीठपूर्वयागे सर्वतोभद्रमण्डलदेवताः वेदमन्त्रेण, नाममन्त्रेण वा सर्वतोभद्रमण्डले आवाहयेत् ।

१. ब्रह्माणं आवाहयामि । २. सोमं आवाहयामि ।
३. ईशानं आवाहयामि । ४. इन्द्रं आवाहयामि ।
५. अग्निं आवाहयामि । ६. यमं आवाहयामि ।
७. निर्ऋतिं आवाहयामि । ८. वरुणं आवाहयामि ।
९. वायुं आवाहयामि । १०. अष्टवसून् आवाहयामि ।
११. एकादशरुद्रान् आवाहयामि । १२. द्वादशादित्यान् आवाहयामि ।
१३. अश्विनौ आवाहयामि । १४. सपैतृकविश्वान्देवान् आवाहयामि ।
१५. सप्तयक्षान् आवाहयामि । १६. सर्पान् आवाहयामि ।

१७. गन्धर्वाप्सरान् आवाहयामि । १८. स्कन्दं आवाहयामि ।
१९. नन्दीश्वरं आवाहयामि । २०. शूलं आवाहयामि ।
२१. महाकालं आवाहयामि । २२. दुर्गां आवाहयामि ।
२३. विष्णुं आवाहयामि । २४. स्वधां आवाहयामि ।
२५. मृत्युरोगौ आवाहयामि । २६. गणपतिं आवाहयामि ।
२७. अद्भ्यः आवाहयामि । २८. मरुद्भ्यः आवाहयामि ।
२९. भूमिं आवाहयामि । ३०. सर्वनदीन् आवाहयामि ।
३१. सप्तसागरान् आवाहयामि । ३२. मेरुम् आवाहयामि ।
३३. गदां आवाहयामि । ३४. त्रिशूलं आवाहयामि ।
३५. वज्रं आवाहयामि । ३६. शक्तिं आवाहयामि ।
३७. दण्डं आवाहयामि । ३८. खड्गं आवाहयामि ।
३९. पाशं आवाहयामि । ४०. अङ्कुशं आवाहयामि ।
४१. गौतमं आवाहयामि । ४२. भारद्वाजं आवाहयामि ।
४३. विश्वामित्रं आवाहयामि । ४४. कश्यपं आवाहयामि ।
४५. जमदग्निं आवाहयामि । ४६. वसिष्ठं आवाहयामि ।
४७. अत्रिं आवाहयामि । ४८. अरुन्धतीं आवाहयामि ।
४९. ऐन्द्रीं आवाहयामि । ५०. कौमारीं आवाहयामि ।
५१. ब्राह्मीं आवाहयामि । ५२. वाराहीं आवाहयामि ।
५३. चामुण्डीं आवाहयामि । ५४. वैष्णवीं आवाहयामि ।
५५. माहेश्वरीं आवाहयामि । ५६. वैनायकीं आवाहयामि ।

एवं सर्वतो भद्रमण्डलदेवान् आवाह्य कलशे ब्रह्माणं आवाह्य सम्पूजयेत् ।

**अथ आदित्यादिग्रहस्थापनम् ।**

ग्रहवेद्यां वस्त्रे उष्टदलं पद्मं गन्धादिना विलिख्य प्रणवस्य परब्रह्म-ऋषिः दैवीगायत्री छन्दः व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगवः ऋषयः । अग्निवायुसूर्यादिदेवताः । दैवीगायत्री दैवी उष्णिक दैवीबृहत्यश्छन्दासि सूर्याद्यन्तर्गत भारतीरमणमुख्यप्राणान्तर्गत शिंशुमाराभिन्न श्रीलक्ष्मीनरसिंहावाहने विनियोगः ।।

ग्रहपीठस्य मध्ये वर्तुले द्वादशाङ्गुले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः आकृष्णेन हिरण्यस्तूपः त्रिष्टुप् छन्दः सविता देवता सूर्यावाहने विनियोगः ।

**ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।।**
(१/३५/२ पृ.२२)

**भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र**
**ॐ सूर्य इहागच्छ इह तिष्ठ ।**
**सूर्याय नमः सूर्यम् आवाहयामि । इति सूर्यं स्थापयेत् ।।१।।**

त्र्यम्बको वसिष्ठो अनुष्टुप् छन्दः अधिदेवता रुद्रावाहने विनियोगः ।

**ॐ त्र्यँम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिवबन्धनात् मृत्योर्मुक्षीय मामृतात् ।।**
**(७/५४/१२ पृ.४३२)**

भूर्भुवः स्वः सूर्यदक्षिणपार्श्वे रुद्राय नमः रुद्रं आवाहयामि ।
अग्निं दूतं मेधातिथिऋषिः गायत्री छन्दः प्रत्यधिदेवता
अग्न्यावाहने विनियोगः ।

**ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**अस्य यज्ञस्य सुक्रतुम् ।। (१/१२/१ पृ.६)**
**भूर्भुवः स्वः सूर्यवामपार्श्वे अग्नये नमः अग्निं आवाहयामि ।।**

आग्नेये चतुरस्त्रं चतुर्विंशाङ्गुले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः आप्यायस्वसमेति गौतमऋषिः गायत्री छन्दः । सोमावाहने विनियोगः ।।

**ॐ आ प्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य संगथे ।। भूर्भुवःस्वः यमुनातीरोद्भव आत्रेयसगोत्र सोम इहागच्छ इह तिष्ठेति सोमाय नमः सोमं आवाहयामि स्थापयामि इति स्थापयेत् ।**

गौरीर्मिमादीर्घतमाऋषिः जगतीछन्दः अधिदेवता उमावाहने विनियोगः ।

एवं सर्वतो भद्रमण्डलदेवान् आवाह्य कलशे ब्रह्माणं आवाह्य सम्पूजयेत् ।

**अथ आदित्यादिग्रहस्थापनम् ।**

ग्रहवेद्यां वस्त्रे उष्टदलं पद्मं गन्धादिना विलिख्य प्रणवस्य परब्रह्म-ऋषिः दैवीगायत्री छन्दः व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगवः ऋषयः । अग्निवायुसूर्यादिदेवताः । दैवीगायत्री दैवी उष्णिक दैवीबृहत्यश्छन्दासि सूर्याद्यन्तर्गत भारतीरमणमुख्यप्राणान्तर्गत शिंशुमाराभिन्न श्रीलक्ष्मीनरसिंहावाहने विनियोगः ।।

ग्रहपीठस्य मध्ये वर्तुले द्वादशाङ्गुले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः आकृष्णेन हिरण्यस्तूपः त्रिष्टुप् छन्दः सविता देवता सूर्यावाहने विनियोगः ।

**ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।।**
**(१/३५/२ पृ.२२)**

**भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र**
**ॐ सूर्य इहागच्छ इह तिष्ठ ।**
**सूर्याय नमः सूर्यम् आवाहयामि । इति सूर्यं स्थापयेत् ।।१।।**

त्र्यम्बको वसिष्ठो अनुष्टुप् छन्दः अधिदेवता रुद्रावाहने विनियोगः ।

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिवबन्धनात् मृत्योर्मुक्षीय मामृतात् ।।**
**(७/५४/१२ पृ.४३२)**

भूर्भुवः स्वः सूर्यदक्षिणपार्श्वे रुद्राय नमः रुद्रं आवाहयामि ।
अग्निं दूतं मेधातिथिऋषिः गायत्री छन्दः प्रत्यधिदेवता
अग्न्यावाहने विनियोगः ।

**ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**अस्य यज्ञस्य सुक्रतुम् ।।** (१/१२/१ पृ.६)
**भूर्भुवः स्वः सूर्यवामपार्श्वे अग्नये नमः अग्निं आवाहयामि ।।**

आग्नेये चतुरस्रं चतुर्विंशाङ्गुले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः आप्यायस्वसमेति गौतमऋषिः गायत्री छन्दः । सोमावाहने विनियोगः ।।

**ॐ आ प्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य संगथे ।। भूर्भुवःस्वः यमुनातीरोद्भव आत्रेयसगोत्र सोम इहागच्छ इह तिष्ठेति सोमाय नमः सोमं आवाहयामि स्थापयामि इति स्थापयेत् ।**

गौरीर्मिमादीर्घतमाऋषिः जगतीछन्दः अधिदेवता उमावाहने विनियोगः ।

**ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।। (१/१६४/४११ पृ.१२८)**

**भूर्भुवः स्वः सोमदक्षिणपार्श्वे उमायै नमः उमां आवाहयामि ।।**

अप्सुमेधातिथिऋषिः अनुष्टुप् चन्दः प्रत्यधिदेवता अपावाहने विनियोगः ।

**ॐ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशं भुवमापश्च विश्वभेषजीः ।।**

भूर्भुवः स्वः सोम वामपार्श्वे अभ्यो नमः अपां आवाहयामि ।।

ततो दक्षिणे त्रिकोणे त्र्यङ्गुले मण्डले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः अग्निर्मूर्धा विरूपऋषिः । गायत्रीछन्दः अङ्गारकावाहने विनियोगः ।

**ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् अपां रेतांसि जिन्वति ।।** (८/४४/१६ पृ.५११)

भूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छ इह तिष्ठेति भौमाय नमः भौमं आवाहयामि इति स्थापयेत् ।

यदक्रन्दो दीर्घतमाऋषिः त्रिष्टुप् छन्दः अधिदेवता स्कन्दावाहने विनियोगः ।

**ॐ यदक्रन्दः प्रथमं जायमान उद्यन् त्समुद्रा दुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महीं जातं ते अर्वन् ।। (१/१६३/०१ पृ.१२३)**

**भूर्भुवः स्वः भौमदक्षिणपार्श्वे स्कन्दाय नमः स्कन्दं आवाहयामि ।**

**स्योना पृथिवी मेधातिथिऋषिः गायत्रीछन्दः भूमिर्देवता भूम्यावाहने विनियोगः ।**

**ॐ स्योना पृथिवि भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ।।**

भूर्भुवः स्वः भौम वामपाश्वे भूम्यै नमः भूमिं आवाहयामि ।। (१/२२/१५ पृ.११)

ततः ऐशान्यां बाणाकारे चतुरङ्गुले मण्डले उदङ्मुखं बुधं पीतपुष्पाक्षतैः उद्बुध्यध्वं सौम्यऋषिः त्रिष्टुप् छन्दः बुधावाहने विनियोगः ।

**ॐ उद्बुध्यध्वं समनसः सखायः समग्निमिंध्वं बहवः सनीळाः । दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ।। (१०/१०१/१ पृ.७१८)**

भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र बुध इहागच्छ इह तिष्ठेति बुधाय नमः बुधं आवाहयामि इति स्थापयेत् ।

विष्णोर्नुकं दीर्घतमा ऋषिः त्रिष्टुप् छन्दः अधिदेवता नारायणो देवता नारायणावाहने विनियोगः ।

**ॐ विष्णोर्नुकं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥**
**(१/१५/४०१ पृ.११७)**

भुर्भूवः स्वः बुधदक्षिणपार्श्वे नारायणाय नमः नारायणं आवाहयामि ।

इदं विष्णुर्मेधातिथिऋषिः गायत्रीछन्दः । विष्णुर्देवता प्रत्यधिदेवता विष्ण्वावाहने विनियोगः ।

**ॐ इदं विष्णु र्विचक्रमे त्रेधा निं दधे पदम् । समूढमस्य पांसुरे ॥ (१/२२/१ पृ.११)**

भूर्भुवः स्वः बुधवामपार्श्वे विष्णवे नमः विष्णुं आवाहयामि ।

तत उत्तरे दीर्घचतुरस्रे मण्डले उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः बृहस्पते गृत्समदो ऋषिः त्रिष्टुप् छन्दः बृहस्पतिर्देवता आवाहने विनियोगः ।

**ॐ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋतप्रजात तदस्मासुद्रविणं धेहि चित्रम् ।**

भूर्भुवः स्वः सिन्धुदेशोद्भव अङ्गिरसगोत्र बृहस्पते इहागच्छ इह तिष्ठ बृहस्पतये नमः बृहस्पतिं आवाहयामि इति स्थापयेत् ।

ब्रह्मजज्ञानं वामदेवऋषिः त्रिष्टुप् छन्दः अधिदेवता ब्रह्मावाहने विनियोगः ।

**ॐ ब्रह्मजज्ञानं प्रथमं पुरस्तात् द्विसीमतः सुरुचौ वेन आवह ।**
**सबुध्न्या उपमा अस्यविष्ठाः सतश्च यो निमसतश्च विवः ।।**

भूर्भुवः स्वः बृहस्पतिदक्षिणपार्श्वे ब्रह्मणेनमः ब्रह्माणं आवाहयामि ।

इन्द्रश्रेष्ठानि गृत्समदऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता प्रत्यधिदेवता इन्द्रावाहने विनियोगः ।

**ॐ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।**
**पोषं स्यीणामरिष्टिं तनूनां स्वाद्मानं वाचःसुदिनत्वमहनाम् ।।**
**(२/२१/६ पृ.१६६)**

भूर्भुवः स्वः बृहस्पति वामपार्श्वे इन्द्राय नमः इन्द्रं आवाहयामि ।।

पूर्वे पञ्चकोणे नवाङ्गुले मण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः । शुक्रः पराशरऋषिः द्विपदा विराट् छन्दः शुक्रो देवता शुक्रः प्रीत्यर्थे आवाहने विनियोगः ।

**ॐ शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची । दिवो न ज्योतिः ।**

भूर्भुवः स्वः भोजकटकदेशोद्भव भार्गवसगोत्र शुक्र इहागच्छ इह तिष्ठ शुक्राय नमः शुक्रं आवाहयामि इति स्थापयेत् ।

इन्द्रं वो मधुच्छन्दा ऋषिः गायत्री छन्दः इन्द्रो देवता अधिदेवता इन्द्रावाहने विनियोगः ।

**ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥**

भूर्भुवः स्वः शुक्रदक्षिणपार्श्वे इन्द्राय नमः इन्द्रं आवाहयामि ॥

इन्द्राणी वृषाकपिऋषिः फङ्क्तिश्छन्दः इन्द्राणी देवता इन्द्राण्यावाहने विनियोगः ।

**ॐ इन्द्राणीमासु नारीषु सुभगामहमश्रवम् ।**
**नह्यस्या अपरं च नजरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥**
(१०/८६/११ पृ.७००)

भूर्भुवः स्वः शुक्रवामपार्श्वे प्रत्यधिदेवता इन्द्राण्यै नमः इन्द्राणीमावाहयामि ॥

ततः पश्चिमे धनुराकारे द्वयङ्गुले मण्डले प्रत्यङ्मुखं शनिं

कृष्णपुष्पाक्षतैः शमग्निरिरिंभिटि ऋषिः । उष्णिक् छन्दः । शनैश्चरो देवता शनैश्चरदेवता प्रीत्यर्थे आवाहने विनियोगः ।

**ॐ शमग्निरग्निभिंः करच्छं नस्तपतु सूर्यः । शं वातो वात्वरपा अप स्त्रिधंः ।**

भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चर इहागच्छ इह तिष्ठ शनैश्चराय नमः शनैश्चरं आवाहयामि इति स्थापयामि ।

यमाय मधुमत्तमेति ऋषिः अनुष्टुप् छन्दः यमो देवता यमावाहने विनियोगः ।

**ॐ यमाय मधुमत्तमं राज्ञे हव्यं जुंहोतन ।**
**इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ।।**
**(१०/१४/१५ पृ.६३६)**

भूर्भुवः स्वः शनैश्चरदक्षिणपार्श्वे अधिदेवता यमाय नमः यमं आवाहयामि ।

प्रजापते हिरण्यगर्भऋषिः त्रिष्टुप् छन्दः प्रजापतिर्देवता प्रजापत्यावाहने विनियोगः ।

**प्रजांपते न त्वदेतान्यन्यो विश्वां जातानि परि ता बंभूव ।**
**यत् कांमास्ते जुहुमस्तन्नो अस्तु वयं स्यांम पतयो रयीणाम् ।।**
**(१०/१२२/१० पृ.७३५)**

भूर्भुवः स्वः शनैश्चरवामपार्श्वे प्रत्यधिदेवता प्रजापतिं आवाहयामि ।

ततो नैरुत्यै शूर्पाकारे द्वादशाङ्गुले मण्डले दक्षिणाभिमुखं राहुं कृष्णपुष्पाक्षतैः कयानो वामदेवऋषिः गायत्रीछन्दः राहुदेवता प्रीत्यर्थे राह्वावाहने विनियोगः ।

**ॐ कया नश्चित्र आ भूवदूती सदावृधः सखा । कया शचिष्ठया वृता ।। (४/३१/१ पृ.२५९)**

भूर्भुवः स्वः राठीनपुरोद्भव पैठीनसगोत्र राहो इहागच्छ इह तिष्ठ इति राहवे नमः राहुं आवाहयामि ।

परं मृत्योरित्यस्य सकुंसुको ऋषिः त्रिष्टुप् छन्दः कालावाहने विनियोगः ।

**ॐ परं मृत्यो अनु परेहि पंथां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् । (१६/१८/१ पृ.६४०)**

भूभुवः स्वः राहुदक्षिणपार्श्वे अधिदेवता कालाय नमः कालं आवाहयामि ।

आयंगौ सार्पराज्ञि सर्पा ऋषिः गायत्री छन्दः सर्पदेवताप्रीत्यर्थे सर्पावाहने विनियोगः ।

**ॐ आयगौः पृश्नीर क्रमीदसंदनृमातरं पुरः । पितरं च प्रयन् त्स्वः ।। (१०/१८९/१ पृ.७६५)**

भूर्भुवः स्वः सर्पेभ्यो नमः सर्पान् आवाहयामि ।

ततो वायव्ये ध्वजाकारे षडङ्गुले मण्डले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः । केतुं कृण्वन् मधुच्छन्दाऋषिः गायत्रीछन्दः केतुर्देवता प्रीत्यर्थे केत्वावाहने विनियोगः ।

**ॐ केतुं कृण्वन्नं केतवे पेशों मर्या अपेशसें । समुषद्भीरजायथाः ।। (१/६/३ पृ.३)**

भूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहागच्छ इह तिष्ठ केतवे नमः केतुं आवाहयामि । उषो वाजं प्रस्कण्वऋषिः बृहतीछन्दः चित्रगुप्तो देवता चित्रगुप्तावाहने विनियोगः ।

**ॐ उषो वाजं हि वंस्व यश्चित्रो मानुंषे जनें । तेन वंहसुक्रतों अध्वराँ उपये त्वां गृणन्ति बह्वयंः ।। (१/४८/११ पृ.३२)**

भूर्भुवः स्वः केतुदक्षिणपार्श्वे अधिदेवता चित्रगुप्तं आवाहयामि ।

ब्रह्मणाते ब्रह्मयुजेत्यस्य विश्वामित्रऋषिः त्रिष्टुप् छन्दः ब्रह्म देवता प्रीत्यर्थे ब्रह्मावाहने विनियोगः ।

**ॐ ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरि सखाय सधमाद आशु । स्थिरं रथं सखन्द्राधितिष्ठन् प्रजानन् विद्वाँ उप याहि । सोमम् ।। (३/३५/४ पृ.२११)**

भूर्भुवः स्वः केतुवामपार्श्वे प्रत्यधिदेवता ब्रह्मणेनमः ब्रह्माणं आवाहयामि ।

**अथ क्रतुषाड्गुण्यदेवताः**

गणानांत्वा शौनको गृत्समदऋषिः जगतीछन्दः गणपतिर्देवता गणपतिप्रीत्यर्थे आवाहने विनियोगः ।

**ॐ गणानां त्वा गणपतिं हवामहे**
**कविं कवीनामुपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत**
**आ नः शृण्वन्नूतिभिः सीदसादनम् । (२/२३/पृ.१६६)**

भूर्भुवः स्वः राहोरुत्तरतो गणपतिं आवाहयामि ।

जातवेदस कश्यपऋषिः त्रिष्टुप् छन्दः दुर्गादेवता दुर्गावाहने विनियोगः ।

**ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।।**

भूर्भुवः स्वः दुर्गायै नमः शनेरुत्तरतो दुर्गां आवाहयामि ।

**तवं वायो व्यश्वऋषि गायत्रीछन्दः वाय्वावाहने विनियोगः ।**

**ॐ तवं वायो वृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ।। (८/२६/२१ पृ.४९४)**

भूर्भुवः स्वः वायवे नमः रवेरुत्ततो वायुं आवाहयामि ।

आदिप्रत्नस्य वत्सऋषिः गायत्रीछन्दः आकाशोदेवता आकाशावाहने विनियोगः ।

**ॐ आदित् प्रत्नस्य रेतसो ज्योतिंष्पश्यन्ति वासरम् । परो यदिध्यतेंदिवा (८/६/३० पृ.४७१)**

एषो उषा प्रस्कण्वऋषिः गायत्रीछन्दः अश्विनौ देवते अश्वावाहने विनियोगः ।

**एषो उषो अपूर्व्या व्युंच्छति प्रिया दिवः । स्तुषे वामश्विन बृहत् ।। (१/४६/१ पृ.३०)**

भूर्भुवः स्वः अश्विभ्यां नमः केतोर्दक्षिणे अश्विनौ आवाहयामि ।

क्षेत्रस्य पतिना वामदेवऋषिः अनुष्टुप् छन्दः क्षेत्रपालो देवता क्षेत्रपालावाहने विनियोगः ।

**ॐ क्षेत्रंस्य पतिंना वयं हितेनेंव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे ।। (४/५७/पृ.२७६)**

भूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालं आवाहयामि ।

वास्तोष्पते वसिष्ठ ऋषिः त्रिष्टुप् छन्दः वास्तोष्पतिर्देवता वास्तोष्पत्यावाहने विनियोगः ।

**ॐ वास्तोष्पते प्रती जानीह्यस्मान् स्वावेशो अनमीवो भवा नः । यत् त्वे महे प्रति तन्नो जुषस्व शनो भव द्विपदे शं चतुष्पदे । (७/५४/१ पृ.४२८)**

भूर्भुवः स्वः वास्तोष्पते नमः वास्तोष्पतिं आवाहयामि ।।

**अथ क्रतुसंरक्षकदेवताः**

ततो प्रागादि इन्द्रं विश्वा जेता मधुच्छदा ऋषि अनुष्टुप् चन्दः पूर्वे इन्द्रावाहने विनियोगः ।

**ॐ इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।**
**रथीतमं रथीनां वाजानां सत्पतिं पतिम् ।।**
**(१/११/१ पृ.५)**

अग्निं दूतं मेधातिथि ऋषिः गायत्री छन्दः ।
अग्निर्देवता अग्न्यावाहने विनियोगः ।

**ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**अस्य यज्ञस्य सुक्रतुम् ।। (१/१२/१ पृ.६)**

भूर्भुवः स्वः आग्नेये अग्निं आवाहयामि ।

यमाय सोमं यमऋषिः अनुष्टुप् छन्दः यमोदेवता यमावाहने विनियोगः ।

**ॐ यमाय सोमं सुनुत यमाय जुहुता हविः ।**
**यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ।।**
**(१०/१४/१३ पृ.६३६)**

भूर्भुवः स्वः यमाय नमः यमं दक्षिणे आवाहयामि ।

मो षु णः काण्वऋषिः गायत्रीछन्दः निर्ऋतिर्देवता निर्ऋत्यावाहने विनियोगः ।

**ॐ मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ।। (१/३८/६ पृ.२८)**

भूर्भुवः स्वः निर्ऋतये नमः नैऋत्ये निर्ऋतिं आवाहयामि ।

तत्वायामि शुनःशेपऋषिः त्रिष्टुप् छन्दः वरुणो देवता वरुणावाहने विनियोगः ।

**ॐ तत् वा यामि ब्रह्मणा वन्दमानस्**
**तदा शास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषी ।।**
**(१/२४/११ पृ.१३)**

भूर्भुवः स्वः वरुणाय नमः पश्चिमे वरुणं आवाहयामि ।।

**तवं वायो व्यश्वऋषिः गायत्रीछन्दः वाव्यावाहने विनियोगः ।**
**ॐ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ।।**

भूर्भुवः स्वः वायवे नमः वायुं आवाहयामि ।।

सोमो धेनुं गौतमऋषिः त्रिष्टुप् छन्दः सोमो देवता सोमावाहने विनियोगः ।

**ॐ सोमो धेनुं सोमो अर्वंतमाशुं सोमो वीरं कर्मण्यं ददाति ।**
**सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददांशदस्मै ।।**
**(१/९१/२० पृ.३६३)**

सोमाय नमः उत्तरे कुबेरसमेत सोमं आवाहयामि ।
तमीशानं गोतमो ईशानो जगती ईशानावाहने विनियोगः ।

**ॐ तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ।**
**पूषा नो यथा वेदसा मसद् वृधे रक्षिता पायुरदब्ध स्वस्तये ।। (१/८९/५ पृ.६१)**

भूर्भुवः स्वः ईशानाय नमः ईशानं आवाहयामि ।।
एवं इन्द्रादि ईशानान्ता देवता आवहयेत् ।

**ॐ तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।**

**अ॒शी॒महिं गा॒धमु॒तप्रंति॒ष्ठां नमों दि॒वे बृंह॒ते सादंनाय ।।**

**(५/४७/७ पृ.३११)**

**आदित्यादिनवग्रहदेवतान्तर्गत भारतीरमणमुख्यप्राणान्तर्गत शिंशुमाराभिन्न श्रीलक्ष्मीनृसिंहं आवाहयामि ।**

**शिंशुमार ध्यानश्लोकः**

ज्ञानानन्दात्मकेविष्णो शिंशुमारवपुण्यथ ।
ऊर्ध्वलोकेषु संस्थाप्य आदित्याद्यास्तदाश्रिताः ।।

**आदित्यादिनवग्रहमण्डलानि**

मध्ये वर्तुलमादित्याय । अग्नेय्यां चतुरस्रं सोमाय । दक्षिणं त्रिकोणमङ्गारकाय । ऐशान्यां बाणाकारं बुधाय । उत्तरे दीर्घचतुरस्रं बृहस्पतये । पूर्वे पञ्चकोणं शुक्राय । पश्चिमे धनुराकारं शनैश्चराय । नैरुत्यां शूर्पाकारं राहवे । वायव्यां ध्वजाकारं केतवे । इति नवग्रहमण्डलानि ।।

इति ऋषिछन्दो दैवतपूर्वकं आकृष्णेत्यादिभिर्मन्त्रैः नवग्रहान् अधिदेवता प्रत्यधिदेवताः क्रतुषाद्गुण्यदेवता क्रतुसंरक्षकदेवताश्च क्रमेण प्रतिष्ठाप्य सर्वोपचारैः सम्पूज्य तदीशान्यां ग्रहकलशं च महीद्यौरित्यादि विधिना संस्थाप्य, कलशे वरुणं सम्पूज्य,

**देवदानव संवादे, मध्यमाने महोदधौ ।**

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणास्तथा ।।
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।।
अङ्गैश्च सहितास्सर्वे कलशं तु समाश्रिताः ।
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।।
आयान्तु देवपूजार्थमभिषेकार्थमादृताः ।
सर्वे समुद्रा सरितः तीर्थानि जलदा नदाः ।।
आयान्तु देवपूजार्थमभिषेकार्थमादरात् ।। इति सम्प्रार्थयेत् ।।

ततः अग्निसमीपमेत्य आचार्यः वेणुधमन्या प्रबोध्य ध्यायेद्देवम् ।

वेणुधमन्याप्रज्वालनस्य महत्वं पारिजाते–

अग्निं प्रज्वालयेद्विद्वान् धमन्नेव च नेतरैः ।
व्यजनेनभवेद्रोगी वस्त्रेणापि तथा नृप ।।
ज्वालीकृत्यकराद्रोगी मुखेनायुष्यवर्जितः ।। इति ।

अग्निप्रबोधने वेणुधमन्याः आवश्यकत्वं अन्यसाधननिषेधं देवलो वदति ।

वस्त्रेण वाऽथ पर्णेन पाणिशूर्पास्य दारुभिः ।
न कुर्यादग्निधमनं कुर्याच्च व्यजनादिना ।।

अत्र सङ्ग्रहकारः–

पर्णेन वै भवेद्व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति आयुःक्षीणं मुखेधमे ॥
धमनीमन्तरं कृत्वा तृष्णं वा काष्ठमेव वा ।
मुखेनाग्निं समिन्धीत मुखादग्निरजायत ॥
वेणोरग्निप्रसूतत्वात् वेणुरग्नेश्च पावनः ।
तस्माद्वेणुधमन्येव धमेदग्निं विचक्षणः ॥
इति प्रयोगपारिजाते ।

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनिलं समिद्धं विश्वतो मुखम् ॥
कुण्डमध्ये स्थितां लक्ष्मीं सर्वाभरणभूषिताम् ।
सर्वावयवसम्पूर्णां ऋतुस्नातां विचिन्तयेत् ॥
देवं नारायणं ध्यात्वा सर्वलक्षणलक्षितम् ।
चतुर्बाहुं विशालाक्षं कोमलं पीतवाससम् ॥ इति ध्यात्वा ।

अग्निमण्डलमध्यस्थं चतुर्बाहुं किरीटिनम् । भक्ताभीष्टप्रदातारम् । ध्ययेद्यशकुनं हरिम् ॥ एवं दक्षिणासहितयज्ञपुरुषं ध्यायेन ।

ततः चत्वारि शृङ्गेत्यस्य गोतमो वामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्याने विनियोगः ।

ॐ चत्वारिशृङ्गातृयो अस्य पादा........ आविवेश । स्मृतिमन्त्राश्च ।

सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः ।
त्रिपात् प्रसन्नवदनः सुखासीनः शुचिस्मितः ।।

स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद् दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ।।

तोमरं व्यजनं वामैः घृतपात्रं धारयन् ।
मेषारूढो जटाबद्धो गौरवर्णो महौजसः ।।
धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः ।
आत्माभिमुखमासीन एवंरूपो हुताशनः ।। इत्यग्निं ध्यायेत् ।

अग्नेः गर्भाधानादिषोडशसंस्कारसिध्यर्थं व्यस्त समस्तव्याहृत्या षोडशवारं पुनश्च पूर्णाहुत्यर्थ एकैकवारं प्रतिसंस्कारार्थं समस्त-व्याहृत्या आज्याहुतिर्होष्ये । तूष्णीमाज्यमुत्पूय स्रुवं संमृज्य भूरादिदेवता ध्यानं कुर्यात् ।

वासुदेवादिकाः शुक्लरक्तपीतसितोज्वलाः ।
चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ।।
सशङ्खचक्रस्वपरः स्तृतीयः शार्ङ्गबाणवान् ।
सशङ्खचक्रस्तुर्यस्तु शङ्खचक्रासिचर्मवान् ।।
इति ध्यात्वा संस्कारहोमं कुर्यात् ।। स्रुवेणाज्यमादाय ।

ॐ भूः स्वाहा अग्नये श्रीअनिरुद्धाय इदं न मम ।
ॐ भुवः स्वाहा वायवे श्रीप्रद्युम्नायेदं न मम ।

ॐ स्वः स्वाहा सूर्याय श्रीसंकर्षणाय इदं न मम ।
ॐ भू र्भुवस्वाहा प्रजापतये श्रीवासुदेवाय इदं न मम ।।

इत्येकवारं एवमेव पञ्चदशवारं साङ्गतासिध्यर्थं पूर्णाहुतिं आज्येन होष्ये ।

**अग्नेः वैष्णवत्वसिद्धिः**

अग्नेः वैष्णवत्वसिध्यर्थं विष्ण्वाहुतीः आज्येन होष्ये ।

ॐ नमो नारायणाय स्वाहा ॐ नमो नारायणाय इदं न मम । इति अष्टवारं, पुरुषसूक्तेन महापुरुषं षोडशवारं, ॐ नमो भगवते वासुदेवाय स्वाहेति द्वादशवारं विंविष्णवे नमः स्वाहेति षड् वारं इति वैष्णवत्वसिद्धिः ।।

तदन्तस्थमुख्यप्राणध्यानम्–

**उद्यद्रविप्रकरसन्निभमच्युताङ्क स्वासीनमस्यनुतिनित्यवचः प्रवृत्तिम् ।**
**ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ।**

तदन्तस्थलक्ष्मीं ध्यायेत् ।

**कौशेयरक्तवसनामरविन्दनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।**
**उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ।।**

तदन्तस्थपरशुरामं ध्यायेत् ।

**अङ्गारवर्णमभितोण्डबहिः प्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।**
**ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयन्तम् ।।**

**ॐ एष हि देवः प्रदिशो नु सर्वा**
**पूर्वो हि जातः स उ गर्भे अन्तः ।**
**स विजायमानः स जनिष्यमाणः**
**प्रत्यङ्मुखांस्तिष्ठति विश्वतो मुखः ।**

अग्ने वैश्वानर शाण्डिल्यगोत्र मेषध्वज मेषारूढ अग्न्यन्तर्गतभारती-रमणमुक्यप्राणान्तर्गत हरणीति परशुराम मम सम्मुखो वरदो भव इति प्रार्थ्य एवं अवशिष्टपुंसवनादिविवाहान्ताः षोडशसंस्कारान् कुर्यात् । एवं कृते सति अशीतिसङ्ख्याकाः आज्याहुतयो भवन्ति । ततः अग्नौ पीठपूजां विधाय ॐ परदेवतायै श्रीलक्ष्मीनारायणाय नमः । इत्यारभ्य महापीठाय ते नमः । इत्यन्तं पीठपूजां कृत्वा परशुराममावाह्य अर्घ्यादिपुष्पपूजांते आवरणरणपूजा ॐ परमपुरुषाय नमः आरभ्य सत्यलोकाधिपतये ब्रह्मणे सभार्याय सवाहनाय सायुध-आय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः । इति आवरणपूजा ।

**अथ अन्वाधानम्**

समिद्वयमादाय क्रियमाणे श्रीमद्भागवतदशमस्कन्ध हवने देवतापरिग्राहार्थं अन्वाधानं करिष्ये । अस्मिन् अन्वाहिते अग्नौ

अग्नीषोमो चक्षुषी आज्येन अत्र प्रधानम् । आदित्यादिनवग्रहान् अमुक सङ्ख्याभिः यथालब्ध अर्कादिजातीया समिद्भिः तिलचर्वाज्याहुतिभिः । अधिदेवता प्रत्यधिदेवताश्च न्यूनसङ्ख्याकाभिः ।

क्रतुषाद्गुण्यक्रतुसंरक्षकदेवताश्च अधिप्रत्यधिदेवतान्यूनसङ्ख्याकाभिः पूर्वोक्ताहुतिभिः पीठदेवताः आज्येन सकृत् सकृदाज्येन परशुरामं सकृत् । विष्णुगायत्र्या विष्णुं त्रिवारं, गायत्र्या ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् स्वाहा । इति अष्टोत्तरशतवारं (१०८) ।

ॐ नमो भगवते वासुदेवाय इति द्वादशाक्षरमन्त्रेण वासुदेवं (१०८) वारं

(विस्तारपक्षे वेदव्यासं मत्स्यं कूर्मं वराहं नारसिंहं रामं वामनं कपिलं दत्तं ऋषभं हयग्रीवं धन्वन्तरिं महिदासं नरनारायणं एताः श्रीमद्भागवतप्रतिपाद्यदेवताः तत्तन्मन्त्रेण इष्टसङ्ख्यया आज्याहुतिभिः श्रीकृष्णं श्रीद्भागवतदशमस्कन्धप्रतिश्लोकैः घृताक्ततिलमधुपाय-साज्याहुतिभिः प्रत्यहं प्रतिश्लोकान्ते स्वाहाकारं पठन् आज्याहुति-र्जुहुयात् ।) समाप्तौ ब्रह्मादिसर्वतोभद्रमण्डलदेवताः एकैकया आज्येन शेषेण स्वष्टिकृतमग्निं इध्मसन्नहनेन रुद्रं अयासमग्निं देवान् विष्णुमग्निं वायुं सूर्यं प्रजापतिं च एताः प्रायश्चित्तदेवताः आज्येन ज्ञाताज्ञात-दोषनिवारणार्थं त्रिवारमग्निं मरुतश्चाज्येन विश्वान् देवान् संसावेण

यक्ष्ये । अङ्गदेवताः प्रधानदेवताः सर्वा सन्निहिताः सन्तु । एवं साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये समस्तव्याहृतीनां परमेष्ठी प्रजापति प्रजापतिर्बृहती अन्वाधानसमिद्धोमे विनियोगः ॐ भू र्भुवस्वाहा प्रजापतये श्रीवासुदेवाय इदं न मम ।। इत्यन्तं अन्वाधानम् ।

इध्मबर्हिषोश्च सन्नहनं त्रिः परिसमूहनं त्रिःपर्युक्षणं त्रिःपरिस्तरणं तत्र प्राच्यां प्रतीच्यां चोदनग्रा दर्भाः अवाच्यां उदीच्यां च प्रागग्राः । पूर्वपश्चात् परिस्तरणयोरुपरि दक्षिणपरिस्तरणम् । उत्तरपरिस्तणं तु तदग्रयोरधस्तात् । ते च दर्भा अनियतसङ्ख्याका एकैकस्यां दिशि चत्वारश्चत्वार इत्येवं षोडश वा । ततो अग्नेर्दक्षिणतः ब्रह्मसनार्थ-मुत्तरतश्त पात्रासादनार्थं कांश्चित् प्रागग्रान् दर्भानास्तृणीयात् उत्तरास्तीर्णेषु दर्भेषु दक्षिणसव्यपाणिभ्यां क्रमेण ।

चरुस्थालीप्रोक्षिण्यौ दर्वीस्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषी चेति द्वे द्वे उदकपवर्गं प्राक्संस्थं न्यूब्जान्यासादयेत् । ततः प्रोक्षणी-पात्रमुत्तानं कृत्वा तत्रानन्तर्गर्भितसाग्रसमस्थूलप्रादेशमात्रे कुशद्वयरूपे पवित्रे निधाय शुद्धाभिरद्भिस्तत्पात्रं पूरयित्वा, गन्धपुष्पाक्षतादिक्षिप्त्वा, हस्तयोरङ्गुष्ठोपकनिष्ठिकाभ्यां उत्तानाभ्यां पाणिभ्यामुदगग्रं पृथक् पवित्रे धृत्वा, अपस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विसृस्य, सर्वाणि पात्राणि त्रिः प्रोक्षेत् । ता आपः किञ्चित् कमण्डलौ क्षिपेदित्यके । प्रणीतापात्रमग्रेः प्रत्यङ् निधाय, तत्र प्रागग्रे पवित्रे

निधाय, उत्पूताभिरद्भिस्तत्पात्रं पूरयित्वा गन्धपुष्पाक्षतान्निक्षिप्य मुखसममुद्धृत्य 'ॐ बृहस्पतिर्ब्रह्मा आशिष्यते बृहस्पते यज्ञं गोपाय, सयज्ञं पाहि, सयज्ञपतिं पाहि, स मां पाहि, ब्रह्मन्नपः प्रणेष्यामि, ॐ प्रणय, अग्नेरुत्तरतो दर्भेषु निधाय ते पवित्रे गृहीत्वा अन्यैर्दर्भ्यैराच्चादयेत् । ते पवित्रे आज्यमात्रे निधाय तत्पात्रं पुरतः संस्थाप्य, तस्मिन्नाज्यमासिच्य, अग्नेरुत्तरतः स्थिताङ्गारान् भस्मना सह अग्नेरुदक् परिस्तरणाद् बहिर्निरुह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलता दर्भोल्मुखेन अवज्वल्य, अङ्गुष्ठपर्वमात्रं दर्भाग्रद्वयं आज्ये प्रक्षिप्य (गृहसिद्धान्नं चरुस्थानादासादितपात्रे निधाय) पुनर्ज्वलता तेनैव दर्भोल्मुखेन चरुणा सह आज्यं त्रिः पर्यग्निं कृत्वा, तदल्मुकमुपास्य अपः स्पृष्ट्वा, आज्यपात्रं भुविकर्षन्निवोद्वुद्वास्य, अङ्गारानग्नौ प्रास्य तत्रस्थमेवाज्यम् ।

सवितुष्ट्वा हिरण्यस्तूपः सविता पुर उष्णिक् आज्यस्योत्पवने विनियोगः ।

ॐ सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूर्ष्णी प्रोक्ष्य पवित्रं ॐ स्कन्दाय स्वाहा स्कन्दायेदं न मम ॥

अथाग्नेः पाश्चादात्मनो भूमिं प्रोक्ष्य, तत्र बर्हिः सन्नहनीं रज्जुं उदगग्रां प्रसार्य, तस्यां बर्हि प्रागग्रमुदकपवर्ग अविरलमास्तीर्य, तस्मिन् आज्यपात्रं निधाय स्रुवादिसंमार्जयेत् ।

दक्षिणहस्तेन स्रुकस्रुवौ गृहत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय स्रुवं वामहस्ते गृहीत्वा दक्षिणहस्तेन स्रुवस्य बिलं दर्भाग्रैः प्रागादिप्रागपवर्गं त्रिःसमृज्य अधस्ताद्दर्भाग्रैरेवाभ्यात्मं बिलपृष्ठं त्रिःसमृज्य, ततो दर्भाणां मूलैर्दण्डस्याधस्ताद् बिलपृष्ठादारभ्य यावदुपरिष्ठाद् बिलं तावत् त्रिःसमृज्य प्रोक्ष्य प्रताप्य, आज्यस्थाल्यादुत्तरतो निधाय दर्भानद्भिः क्षालयित्वा अग्नावनुप्रहरेत् ।

ततः सुश्रुतचरुं अग्नावधिश्रित्य स्रुवगृहीतेनाज्येन अभिगार्य, त्रिःप्रोक्ष्य उदगुद्वास्य, अग्न्याज्ययोर्मध्येन नीत्वा, आज्याद्दक्षिणतो बर्हिषिसान्तरमासाद्य, पुनरप्यभिगार्य नवाभिगार्य अग्नायतदेकादशाङ्गुल-परिमिते देशे अग्निं समन्त्रकं सममभ्यर्चयेत् ।

विश्वानिन इति तिसृणां वसुश्रुतो अग्निः त्रिष्टुप् द्वयोरर्चने अन्त्याया उपस्थाने विनियोगः ।

**ॐ विश्वा॑नि नो दु॒र्गहा॑ जातवे॒दः । ॐ सिन्धुं॒ न ना॒वा दु॑रि॒ताति॑ पर्षि ।**

**ॐ अग्ने॑ अत्रि॒वन्नमसा गृणानः । ॐ अस्माक बोध्यवि॒ता त॒नूना॑म् ।**

**ॐ यस्त्वा॑ हृदा की॒रिणा॒ मन्य॑मा॒नः । ॐ अम॑र्त्यं॒ मर्त्यो॒ जोह॑वीमि ।**

**ॐ जातवेदो यशो अस्मासु धेहि । प्रजाभिरग्ने अमृतत्व-मश्याम् ।**

**ॐ यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवस्योनम् । अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नं शते स्वस्ति ।।**
**(५/४/९,१०,११ पृ.२८२,२८३)**

इध्ममलङ्कृत्य, ब्रह्माणमलङ्कृत्य स्वयमलङ्कुर्यात् हस्तं प्रक्षाल्य इध्मबन्धनरज्जुं इध्मस्थाने निधाय पाणिनेध्ममादाय, मूलमध्याग्रेषु स्रुवेण त्रिरभिघार्य । मूलमध्योर्मध्यभागे गृहीत्वा अयन्ते वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महवने विनियोगः ।

ॐ अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्धवर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा । जातवेदसे अग्नय इदं न मम ।

आघारहोमे वायव्यकोणमारभ्य आग्नेय कोणपर्यन्तं प्रजापतिपदं मनसा स्मरन् प्रजापतये स्वाहा प्रजापतय इदं न मम । उत्तरः अग्नये स्वाहा अग्नय इदं न मम । दक्षिणतः सोमाय स्वाहा सोमाय इदं न मम ।

संस्कृताज्येध्मयोः हविर्द्रव्याणां च विष्णवे निवेदयेत् ।

## अथ वराहुतिहोमः

अवदानधर्मेण चरुमवदाय गणानां त्वा शौनको गृत्समदो गणपतिर्जगती गणपत्यन्तर्गतभारतीरमणमुख्यप्राणान्तर्गत-विश्वम्भरप्रीत्यर्थे वराहुतिहोमे विनियोगः ।

**ॐ गणानां त्वा गणपतिं हवामहे**
**कविं कवीनामुपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः**
**शृण्वन्नूतिभिः सीद सादनम् स्वाहा ।। (२/२३/१ पृ.१६६)**

गणपतय इदं न मम ।

अस्मिन् श्रीमद्भागवतदशमस्कन्धहवनाख्यकर्मणि इमानि परिकल्पितहवनीयद्रव्याणि या याः यक्षमाणदेवताः ताभ्यः ताभ्यः हुतं होष्यमाणं च मया परित्यक्तानि सकृदेव न मम । इति यजमानः सपत्नीकः साक्षतपुष्पजलं विसृजेत् ।

## अथ अन्वाधानोक्तहोमक्रमः

अथ आदित्यादिनवग्रहदेवताअधिदेवताप्रत्यधिदेवताकृतुषाड्गुण्य-क्रतुसंरक्षदेवताः अन्वाधानोक्तक्रमेण हुत्वा परदेवतायै श्रीलक्ष्मी-नारायणाय स्वाहा इत्यारभ्य हरये योगपीठस्वरूपात्मने श्रीमदनन्तताय स्वाहा इत्यन्तं पीठदेवताः हुत्वा । मूलमन्त्रेण श्रीपरशुरामं सम्पूज्य

अङ्गारवर्णेति परशुरामं ध्यात्वा ॐ भां भार्गवाय स्वाहा इति त्रिवारम् । ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् । इति विष्णुगायत्र्या त्रिवारम् । गायत्र्या स तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ इति १०८ वारम् ।

ॐ नमो भगवते वासुदेवाय स्वाहा इति १०८ वारम् । ॐ व्यां वेदव्यासायनमः स्वाहा इति १०८ वारम् । श्रीमद्भागवतप्रत्यक्षर-सन्धिपदवाक्यपादश्लोकाध्यायदशमस्कन्धप्रतिपाद्य रुक्मिणीसत्यभामा-समेत श्रीकृष्णदेवतामुद्दिष्य होमः कार्यः । अन्ते ब्रह्मादिसर्वताभद्र देवान्, तत्वन्मन्त्रैः, नाममन्त्रैर्वा होमं कुर्यात् ।

अथ दशमस्कन्धगतश्लोकैः होमारम्भः ॥

अम्भृणीपतिवेदव्यासाभिन्नरुक्मिणीसत्यभामापतिश्रीकृष्णाय नमः ॥

राजोवाच स्वाहा ।

**कथितो वंशविस्तारो भवता सोमसूर्ययोः ।**
**राज्ञां चोभयवंशानां चरितं परमाद्भुतं स्वाहा ॥ १ ॥**

**यदोश्च धर्मशीलश्च नितरां मुनिसत्तम ।**
**तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः स्वाहा ॥ २ ॥**

अवतीर्य यदोर्वंशे भगवान् भूतभावनः ।
कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् स्वाहा
॥ ३ ॥

निवृत्ततर्षैरुपगीयमानाद् भवौषधात् श्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विनाऽति-
मुग्धात् स्वाहा ॥ ४ ॥

पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ।
दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्
प्लवाः स्वाहा ॥ ५ ॥

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ।
जुगोपकुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः
स्वाहा ॥ ६ ॥

वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ।
प्रयच्छतो मृत्युमनामयं च मायामनुष्यस्य वदस्व विद्वन्
स्वाहा ॥ ७ ॥

रोहिण्यास्तनयः प्रोक्तो रामः सङ्कर्षणस्तथा ।
देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना स्वाहा ॥ ८ ॥

कस्मान्मुकुन्दो भगवान् पितुर्गेहाद् व्रजं गतः ।
क्व वासं ज्ञातिभिः सार्धं कृतवान् सात्वतां पतिः स्वाहा
॥ ९ ॥

व्रजे वसन् किमकरोन्मधुपुर्यां च केशवः ।
भ्रातरं चावधीत् कंसं मातुरद्धातदर्हणं स्वाहा ।। १० ।।

देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ।
यदुपुर्यामिवावात्सीत् पत्न्यः कत्यभवन् विभोः स्वाहा ।।

एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ।
वक्तुमर्हसि धर्मज्ञ श्रद्धधानाय विस्तरात् स्वाहा ।। १२ ।।

नैषाऽतिदुस्सहा क्षुन्मां त्यक्तोदमपिबाधते ।
पिबन्तं त्वन्मुखाम्भोजात् सृतं हरिकथामृतम् स्वाहा ।।

सूत उवाच स्वाहा
एतन्निशम्य भृगुनन्दनसाधुवादं
वैय्यासकिः स भगवानथ विष्णुरातम् ।
प्रत्यर्च्य कृष्णचरितं कलिकल्यषघ्नं
व्याहर्तुमारभत भागवतप्रधानः स्वाहा ।। १४ ।।

श्रीशुक उवाच स्वाहा
सम्यग् व्यवसिता बुद्धिस्तव राजर्षिसत्तम ।
वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः स्वाहा ।। १५ ।।

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि ।
वक्तारं पृच्छकं श्रोतृंस्तत्पादसलिलं यथा स्वाहा ।। १६ ।।

भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ स्वाहा ।। १७ ।।

गौर्भूत्वाऽश्रुमुखी खिन्ना रुदन्ती करुणं यथा ।
उपस्थिताऽन्तिके तस्मै व्यसनं समरोचत स्वाहा ।। १८ ।।

ब्रह्मा तदुपधार्याऽथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः स्वाहा ।। १९ ।।

तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः स्वाह ।। २० ।।

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदिशानुवाच ह ।
गां पौरूषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव
माचिरम् स्वाह ।। २१ ।।

पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्युदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्
भुवि स्वाहा ।। २२ ।।

वसुदेवगृहे साक्षात् भगवान् पुरुषः परः ।
जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः स्वाहा ।। २३ ।।

वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया स्वाह ।। २४ ।।

योगमाया भगवती यया सम्मोहितं जगत् ।
आदिष्टा प्रभुणांऽशेज कार्यार्थे सम्भविष्यति स्वाहा ।। २५ ।।

श्रीशुक उवाच स्वाहा
इत्यादिश्यामरगणान् प्रजापतिपतिर्विभुः ।
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ स्वाहा
।। २६ ।।

शूरसेनो यदुपतिर्मधुरामावसन् पुरीम् ।
माधुरान् शूरसेनांश्च विषयान् बुभुजे स्वराट् स्वाहा
।। २७ ।।

राजधानीं ततः साऽसीत् सर्वयादवभूभुजाम् ।
मधुरा भगवान् यत्र नित्यं सन्निहितो हरिः स्वाहा ।। २८ ।।

तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ।
देवक्या भार्यया सार्धं प्रयाणे रथमारुहत्स्वाहा ।। २९ ।।

उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ।
रश्मीन् हयानां जगृहे रौक्मै रथशतैर्वृतःस्वाहा ।। ३० ।।

चतुःशतं पारिबर्हं गजानां हेममालिनाम् ।
अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् स्वाहा ।। ३१ ।।

दासीनां सुकुमारीणां द्वे शते समलङ्कृते ।
दुहित्रे देवकः प्रादाद् याने दुहितृवत्सलः स्वाहा ।। ३२ ।।

शङ्कतुर्यमृदङ्गानि नेदुर्दुन्दुभयः समम् ।
प्रयाणप्रक्रमे तात वरवध्वोः सुमङ्गलम् स्वाहा ।। ३३ ।।

पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ।
अस्यास्त्वमष्टमो गर्भो हन्ता यां नयसेऽबुध स्वाहा ।।३४

इत्युक्तः स खलः पापो भोजानां कुलपांसनः ।
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् स्वाहा ।।३५

तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ।
वसुदेवो महाभाग उवाच परिसान्त्वयन् स्वाहा ।। ३६ ।।

वसुदेव उवाच स्वाहा
श्लाघनीयगुणैः शूरैर्भवान् भोजयशस्करः ।
स कथं भगिनीहन्याः स्त्रियमुद्वाह कर्मणि स्वाहा ।। ३७ ।।

मृत्युर्जन्मवतां वीर देहेन सह जायते ।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः स्वाहा
।। ३८ ।।

देहे पञ्चत्वमापन्ने देहीकर्मानुगोऽवशः ।
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुःस्वाहा ।। ३९ ।।

व्रजंस्तिष्ठन् पदैकेन यथैवेकेन गच्छति ।
यथा तृणजलूकैवं देही कर्मगतिं गतः स्वाहा ।। ४० ।।

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाऽभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनासाऽनुचिन्तयन् प्रपद्यते तत् किमपि
ह्यपस्मृतिः स्वाहा ।। ४१ ।।

यतो यतो धावति दैवचोदितं
मनो विकारात्मकमात्मपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते स्वाहा ।। ४२ ।।

ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ।
एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो
विमुह्यति स्वाहा ।। ४३ ।।

तस्मान्न कस्यचिद्द्रोहमाचरेत् स तथाविधः ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् स्वाहा ।।

एषा तवानुजा बाला कृपणा पुत्रिकोपमा ।
हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल स्वाहा ।।४५।।

श्रीशुक उवाच स्वाहा
एवं स सामभिर्भेदैश्चोद्यमानोऽपि दारुणः ।
न न्यवर्तत कौरव्य पुरुषादननुव्रतः स्वाहा ।। ४६ ।।

निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः ।
प्राप्तकालं प्रतिव्योढुमिदं तत्रान्तपद्यत स्वाहा ।। ४७ ।।

मृत्युर्बुद्धिमताऽपोह्यो यावद् बुद्धिबलोदयम् ।
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः स्वाहा ।। ४८ ।।

प्रत्यर्प्य मृत्यवे पुत्रान् मोचये कृपणामिमाम् ।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् स्वाहा ।।

विपर्ययो वा किं न स्यात् गतिर्धातुर्दुरत्यया ।
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् स्वाहा ।। ५० ।।

अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ।
एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुःस्वाहा ।।

एवं विमृष्य तं पापं यावदात्मनि दर्शयन् ।
सान्त्वयामास वै शौरिर्बहुमानपुरःसरम् स्वाहा ।। ५२ ।।

प्रत्यग्रवदनाम्भोजो नृशंसं निरपत्रपम् ।
मनसा दूयमानेन प्रहसन्निदमब्रवीत् स्वाहा ।। ५३ ।।

वसुदेव उवाच स्वाहा
न ह्यास्यास्ते भयं सौम्य यद् वै त्वाऽहाशरीरवाक् ।
पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् स्वाहा ।।५४

इत्यारभ्य शमस्कन्धस्य त्र्यधिकशततमोध्यायस्य अन्तिमश्लोकः–

सूत उवाच स्वाहा
य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरित-
ममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तकर्णावतंसं
भगवति कृतचित्तो याति तत्क्षेमधाम ।।

श्रीभा.१०/१०३/४२

दशमस्कन्धहोमसमाप्त्यनन्तरं आवरणहोमः । ॐ परमपुरुषाय स्वाहा इत्यारम्भ सत्यलोकाधिपतये ब्रह्मणे सभार्याय सवाहनाय सायुधाय सपरिग्रहाय श्रीविष्णुपार्षदाय स्वाहा । इत्यन्तं आवरणहोमः ।।

**अथसर्वतोभद्रब्रह्मादिदेवतामण्डलदेवताहोमः**

मध्ये ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् ब्रह्मा प्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ ब्रह्मं जज्ञानं प्रथमं पुरस्ताद्विसीमतः । सुरुचो वेन आवः । स बुध्नि या उपमा अस्य विष्ठास्सतश्चयोनिमसतश्च विवः स्वाहा ।। १ ।।**

ब्रह्मण इदं न मम ।

आप्यायस्व गोतमः सोमो गायत्री सोमप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ आऽप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य संगथे स्वाहा ।। २ ।। (१/९१/१६ पृ.६३)**

सोमाय इदं न मम ।।

अभि त्वा शुनः शेपः ईशानो गायत्री ईशानप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ अभित्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे स्वाहा ।। ३ ।। ईशानाय इदं न मम ।। (१/२४/३ पृ.१२)**

इन्द्र वो मधुच्छन्दा इन्द्रो गायत्री इन्द्रप्रीत्यर्थे विहितहवने विनियोगः ।।

**ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः स्वाहा ।। ४ ।। इन्द्राय इदं न मम ।। (१/७/१० पृ.४)**

अग्निदूतं मेधातिथिरग्निर्गायत्री अग्निप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् स्वाहा ।। ५ ।। अग्नय इदं न मम ।। (१/१२/१ पृ.६)**

यमाय सोमं यमोयमोनुष्टुप् यमप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः स्वाहा ।। ६ ।। यमाय इदं न मम ।। (१०/१४/१३ पृ.६३६)**

मो षुणः काण्वो निर्ऋतिर्गायत्री निर्ऋति प्रीत्यर्थे विहित हवने विनियोगः ।

**ॐ मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह स्वाहा ।। ७ ।। निर्ऋतय इदं न मम ।**
**(१/३८/६ पृ.२५)**

तत्वायामि शुनःशेपो वरुणस्त्रिष्टुप् वरुणप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ तत् त्वा यामि ब्रह्मणा वन्दमानस्**
**तदाशास्ते यजमानो हविर्भिः ।**
**अहेळमानो वरुणेह बोध्युरुशं**
**स मा न आयुः प्रमोषीः स्वाहा ।। ८ ।।**
**वरुणाय इदं न मम ।। (१/२४/४ पृ.१३)**

वायो शतं वायुदेवो वायुरनुष्टुप् वायुप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ वायो शतं हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा स्वाहा ।। ९ ।। वायव इदं न मम ।। (४/४८/५ पृ.२७१)**

ज्मया अत्र वसिष्ठोवसवस्त्रिष्टुप् अष्टवसुप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त**

**शुभ्राः । अर्वाक् प्रथ उरूजयः कृणुध्वं दूतस्य जग्मुषो नो अस्य स्वाहा ।। १० ।। अष्टवसुभ्य इदं न मम ।। (७/३९/३ पृ.४२२)**

अष्टवसवः– १ आपः २ धरः ३ ध्रुवः ४ सोमः ५ अनिलः ६. अनलः ७ प्रत्यूषः ८ प्रभासः(द्यु) इति हरिवंशे ।। (१,३)

आरुद्रासः श्यावाश्व एकादशरुद्राजगती एकादशरुद्रप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत् प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे स्वाहा ।। ११ ।। एकादशरुद्रेभ्य इदं न मम । (५/५७/१ पृ.३१९)**

एकादशरुद्राः – १ अजैकपात् २ अहिर्बुध्न्यः ३ विरूपाक्षः ४ रैवतः ५ हरः ६ बहुरूपः ७ त्र्यम्बकः ८ सुरेश्वरः ९ सावित्रः १० जयन्तः ११ पिनाकी ।

त्यान् नुमत्स्योमान्यो वा द्वादशादित्यागायत्री द्वादशादित्यप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ त्यान् नु क्षत्रियाँ अव आदित्यान् याचिषामहे । सुमृळीकाँ अभिष्टये स्वाहा ।। १२ ।।**

द्वादशादित्येभ्य इदं न मम ।। (८/६७/१ पृ.५३१)

द्वादशादित्याः– १ धाता २ मित्रः ३ अर्यमा ४ शक्रः ५ वरुणः ६ अंशः ७ भगः ८ विवस्वान् ९ पूषा १० सविता ११ त्वष्टा १२ विष्णुः ।

अश्विनावर्ति गोतमो अश्विना उष्णिक् अश्विनीदेवतेप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ अश्विना वर्तिरस्मदा गोमदस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् स्वाहा ।। १३ ।।**

अश्विभ्यामिदं न मम ।। (१/९२/१६ पृ.६५)

ओमासो मधुच्छन्दा विश्वेदेवा गायत्री विश्वेदेवा प्रीत्यर्थे विहित हवने विनियोगः ।

**ॐ ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांसो दाशुषः सुतं स्वाहा ।। १४ ।।**

विश्वेदेवेभ्य इदं न मम ।। (१/३/७ पृ.२)

अभित्यं वामदेवः सप्तयक्षा अष्टी सप्तयक्षेप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ अभित्यं देवं सवितारं मोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियंमतिं कविम् । ॐ ऊर्ध्वा यस्या मतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिमिमीत् सुक्रतुः कृपास्वंः स्वाहा ।। १५ ।।**

सप्तयक्षेभ्य इदं न मम ।।

आयं गौ सार्पराज्ञी सर्पा गायत्री सर्पेभ्यः प्रीत्यर्थे विहितहोमे विनियोगः ।

**ॐ आयं गौः पृश्निरक्रमीदसंदन्मातरं पुरः । पितरं च प्रयन् स्वंः स्वाहा ।। १६ ।।**

सर्पेभ्यः इदं न मम ।। (१/१८९/१ पृ.७६५)

अप्सरसामृष्यशृंगो गंधर्वाप्सरसोनुष्टुप् गन्धर्वाप्सरसप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ अप्सरसां गन्धर्वाणां मृगाणां चरंणे चरंन् । केशी केतंस्य विद्वान् सखा स्वादुर्मदिन्तंमः स्वाहा ।। १७ ।।**

गन्धर्वाप्सरसेभ्य इदं न मम ।। (१०/१३६/६ पृ.७४४)

यदक्रन्दों दीर्घतमा स्कन्दस्त्रिष्टुप् स्फन्दप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ यदक्रन्दः प्रथमं जायमानः उद्यन् त्समुद्रादुत वा पुरीषात् ।**

**श्येनस्य पक्षाहरिणस्य बाहू उपस्तुत्यं महि ज्ञातं ते अर्वन् स्वाहा ।। १८ ।।**

स्कन्दाय इदं न मम ।। (१/१६३/१ पृ.१२३)

ऋषभमृषभो नन्दीश्वरोनुष्टुप् नन्दीश्वरप्रीत्यर्थे विहितहवने विनियोगः ।।

**ॐ ऋषभं मा समानानां सपत्नानां विषासहिम् । हन्तारं शत्रूणां कृधि विराजं गोपतिं गवां स्वाहा ।। १९ ।।**

नन्दीश्वराय इदं न मम ।।

कद्रुद्राय घौरः कण्वः शूलो गायत्री शूलप्रीत्यर्थे विहितहवने विनियोगः ।।

**ॐ कद् रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे स्वाहा ।। २० ।।**

शूलाय इदं न मम ।। (१/५४/१ पृ.२८)

कुमारं माता कुमारो महाकालस्त्रिष्टुप् महाकालप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिनज्जनासः पुरः पश्यन्तिनिहितं मरतौ स्वाहा ।। २१ ।।**

महाकालायेदं न मम ।। (५/२/१ पृ.२८१)

अदितिर्बहस्पतिर्दक्षोनुष्टुप् दक्षप्रत्यर्थे विहितहवने विनियोगः ।

**ॐ अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतं बन्धवः स्वाहा ।। २२ ।। दक्षाय इदं न मम ।।**

तामग्निवर्णां सौभरिर्दुर्गात्रिष्टुप् दुर्गाप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ तामग्निवर्णां तपसा ज्वलन्तीं वैं रोचनीं कर्मफलेषु जुष्टां । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमस्स्वाहा ।। २३ ।। दुर्गायेदं न मम ।। (परिशिष्ट २६/१२/ पृ.७८०)**

इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णुप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे स्वाहा ।। २४ ।।**

विष्णव इदं न मम ।। (२२/१७ पृ.११३)

उदीरता शङ्खःस्वधा त्रिष्टुप् स्वधा प्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ उदीरता उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका । ऋतज्ञास्तेनोवन्तु पितरो हवेषु स्वाहा ।। २५ ।। स्वधायै इदं न मम ।।**

परं मृत्योसंकुसुको मृत्युरोगास्तत्रिष्टुप् मृत्युरोगाप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ परं मृत्यो अनु परेहि पंथां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा ।। २६ ।। मृत्युरोगेभ्यो इदं न मम ।।**

गणानां त्वा शौनको गृत्समदो गणपतिर्जगती गणपतिप्रीत्यर्थे विहित हवने विनियोगः ।

**गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तम् । ज्येष्ठराजं ब्रह्मणां स्पत आनः शृण्वन्नूतिभिः सीद सादनं स्वाहा ।। २७ ।। गणपतय इदं न मम ।। (२/२३/१ पृ.१६६)**

शनोदेवीः सिन्धुद्वीप आपो गायत्री अपप्रीत्यर्थे विहित हवने विनियोगः ।

**ॐ शं नों देवीरभिष्टय आपों भवन्तुपीतयें शंयो रभि स्रवन्तु नः स्वाहा ।। २८ ।। अब्भ्य इदं न मम ।। (१०/९/४ पृ.६३२)**

मरुतो यस्य गोतमो मरुतो गायत्री मरुद्देवताप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ मरुतो यस्य हि क्षयें पाथा दिवो विमहसः । स सुगोपातमोजनः स्वाहा ।। २९ ।। मरुद्भ्य इदं न मम ।। (१/८६/१ पृ.५९)**

स्योना पृथिविमेधातिथिर्भूमिर्गायत्री भूमिप्रीत्यर्थे विहितहवने विनियोगः ।

**ॐ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छांनः शर्म सप्रथः स्वाहा ।। ३० ।। भूम्यै इदं न मम ।। (१/२२/१५ पृ.११)**

**इमं मे गंगे सिन्धुक्षित् प्रियमेधा नद्यो जगती गंगादिसर्वनदीप्रीत्यर्थे विहितहवने विनियोगः ।**

**ॐ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया स्वाहा ।। ३१ ।। गङ्गादिसर्वनदीभ्य इदं न मम ।। (१०/७५/५ पृ.६९०)**

धाम्नो धाम्नो वामदेवः सप्तसागरा अष्टीसप्तसागरप्रीत्यर्थे विहितहवने विनियोगः ।

ॐ धाम्नों धाम्नो राजन्नितो वरुंण नो मुञ्च । यदापो मयि वापो मोषंधीर्हि सीरतों विश्व व्यंचा भूस्त्वेतो वरुणं नो मुञ्च ।। यदापो अघ्न्या इति वरुंणेति शापांमहे ततो वरुणं नो मञ्च स्वाहां ।। ३२ ।। वरुणायेदं नमम ।।

ॐ मेरवे स्वाहा । मेरव इदं न मम ।। ३३ ।।
ॐ गदायै स्वाहा । गदायै इदं न मम ।। ३४ ।।
ॐ त्रिशूलायस्वाहा । त्रिशूलाय इदं न मम ।। ३५ ।।
ॐ वज्राय स्वाहा । वज्राय इदं न मम ।। ३६ ।।
ॐ शक्तये स्वाहा । शक्तय इदं न मम ।। ३७ ।।
ॐ दण्डाय स्वाहा । दण्डाय इदं न मम ।। ३८ ।।
ॐ खड्गाय स्वाहा । खड्गाय इदं न मम ।। ३९ ।।
ॐ पाशाय स्वाहा । पाशाय इदं न मम ।। ४० ।।
ॐ अङ्कुशाय स्वाहा । अङ्कुशाय इदं न मम ।। ४१ ।।
ॐ गौतमाय स्वाहा । गौतमाय इदं न मम ।। ४२ ।।
ॐ भरद्वाजाय स्वाहा । भरद्वाजाय इदं न मम ।। ४३ ।।
ॐ विश्वामित्राय स्वाहा । विश्वामित्राय इदं न मम ।।४४।।
ॐ कश्यपाय स्वाहा । कश्यपाय इदं न मम ।। ४५ ।।
ॐ जमदग्नये स्वाहा । जमदग्नय इदं न मम ।। ४६ ।।

**ॐ वसिष्ठाय स्वाहा । वसिष्ठाय इदं न मम ।। ४७ ।।**

**ॐ अत्रये स्वाहा । अत्रय इदं न मम ।। ४८ ।।**

**ॐ अरुंधत्यै स्वाहा । अरुंधत्यै इदं न मम ।। ४९ ।।**

**ॐ ऐन्द्रै स्वाहा । ऐन्द्रै इदं न मम ।। ५० ।।**

**ॐ कौमार्यै स्वाहा । कौमार्यै इदं न मम ।। ५१ ।।**

**ॐ ब्राह्मै स्वाहा । ब्राह्मै इदं न मम ।। ५२ ।।**

**ॐ वाराह्यै स्वाहा । वाराह्यै इदं न मम ।। ५३ ।।**

**ॐ चामुण्डायै स्वाहा । चामुण्डायै इदं न मम ।। ५४ ।।**

**ॐ वैष्णव्यै स्वाहा । वैष्णव्यै इदं न मम ।। ५५ ।।**

**ॐ माहेश्वर्यै स्वाहा । माहेश्वर्यै इदं न मम ।। ५६ ।।**

**ॐ वैनायक्यै स्वाहा । वैनायक्यै इदं न मम ।। ५७ ।।**

इति सर्वतोभद्रमण्डलदेवताः विस्तृतान्वाधान पक्षे तथैव होमः कर्तव्यः । इत्यन्वाधान होमक्रमः । पूजास्विष्टं नवाहुत्या इति वचनात् । स्विष्टकृद्धोमात् पूर्वं स्थापितदेवान् संपूजययेत् ।

**अथ स्विष्टकृद्धोमः ।**

स्विष्टकृतं द्विरभिघार्य

यदस्येति हिरण्यगर्भोग्निः स्विष्टकृदतिधृतिः श्रीमद्भागवतदशमस्कन्ध स्विष्टकृद्धोमे विनियोगः ।

**यदस्य कर्मणो त्यरीरिचं यद्वा न्यूनमिहाकरम् ।**
**अग्निस्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे स्वाहा ।।**

**अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान्नः कामान् समर्धयस्वाहा ।। स्विष्टकृतेग्नय इदं नमम ।।**

इति एकश्रुत्योच्चार्य अग्नेः इशानदेशे जुहुयात् ।।

स्विष्टकृदग्नय इदं न मम । इध्मबन्धनरज्जुं विस्रस्य, रुद्राय तन्तिचराय पशुपतये स्वाहा रुद्राय तन्तिचराय पशुपतय इदं न मम ।।

अप उपस्पृष्य स्रुवेण प्रायश्चित्ताज्याहुतीः सप्तजुहुयात् ।।

अयाश्चेति विमदोयाग्निः पङ्क्तिः प्रायश्चित्ताज्यहोमे विनियोगः ।

**ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासा वयसा कृतो यासन् हव्यमूहिषे यानो धेहि भेषजं स्वाहा ।।**

अयासेग्नय इदं न मम ।।

अतो देवा मेधातिथिर्देवा गायत्री प्रायश्चित्ताज्यहोमे विनियोगः ।

**ॐ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ।। देवेभ्य इदं न मम ।।**
(१/२२/१६ पृ.११)

इदं विष्णुः काण्वो मेधातिथिर्विष्णुर्गायत्री प्रायश्चित्ताज्यहोमे विनियोगः ।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे स्वाहा । (१/२२/१७ पृ.११)**

विष्णव इदं न मम ।।

व्यस्तसमस्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजप्रजापतः ऋषयः । अग्निवायुसूर्यप्रजापतयो देवताः । गायत्र्युष्णिक् अनुष्टुप् बृहत्यश्छदांसि प्रायश्चित्ताज्यहोमे विनियोगः ।

ॐ भूः स्वाहा अग्नये श्रीअनिरुद्धाय इदं न मम ।
ॐ भुवः स्वाहा वायवे श्री प्रद्युम्नाय इदं न मम ।।
ॐ स्वः स्वाहा सूर्याय संकर्षणाय इदं न मम ।
ॐ भूर्भुवः स्वः स्वाहा प्रजापतये श्रीवासुदेवाय इदं न मम ।।

अनाज्ञातमिति मन्त्रद्वयस्य हिरण्यगर्भोऽग्निरनुष्टुप् ज्ञाताज्ञातदोषनिबर्हणार्थं प्रायश्चित्ताज्यहोमे विनियोगः ।

**ॐ अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पयत्वं हिवेत्थ यथातथग् स्वाहा ।। अग्नय इदं न मम ।।**

**ॐ पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः ।**
**अग्ने तदस्य कल्पयत्वगं हिवेत्थं यथातथगं स्वाहा ।।**

अग्नय इदं न मम ।।

यत्पाकत्रेत्याप्स्यस्त्रितोऽग्निस्त्रिष्टुप् प्रायश्चित्ताज्यहोमे विनियोगः ।

**ॐ यत्पाकत्र्या मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।**
**अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवागं ऋतुशो यजाति स्वाहा ।।**

अग्नय इदं न मम ।।

यद्वो देवा अभितपा मरुतस्त्रिष्टुप् प्रायश्चित्ताज्यहोमे विनियोगः ।

**यद्वो देवा अतिपातयानि वाचा च प्रयुती देवहेळनम् ।**
**अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा ।।**

मरुद्भ्य इदं न मम । यज्ञोपघातादौ प्रायश्चित्तानि ।

अस्मिन् भागवतदशमस्कन्धहोमाख्यकर्मणि क्रिमिकीटपिपीलिकामक्षिकाद्युपघातदोषपरिहारार्थं द्वे मिन्दाहुती होष्यामि ।

**ॐ यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणि स्वाहा ।।**

मिन्दवतेऽग्रय इदं न मम ॥

**ॐ पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः ।**
**पुनर्मे अश्विनायुवं चक्षुराधत्तमक्ष्योः स्वाहा ॥**

मिन्दवते अग्रय इदं न मम ।

अस्मिन् भागवतदशमस्कन्धहोमाख्यकर्मणि स्वराक्षरपदवर्ण-भेषजनित प्रत्यवायपरिहारार्थम् आभिर्गीर्भिरित्येकां आज्याहुतिं होष्यामि ।

**आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ।**
**यदा स्तोतृभ्यो महीगोत्रारुजासि भूयिष्ठभाजो अधते स्याम स्वाहा ॥**

इन्द्राय हरिवतय इदं न मम । इति प्रायश्चित्तम् ।

**अथ बलिदानम् ॥**

प्रायश्चित्तहोमान्ते दिक्पालेभ्यः आदित्यादिनवग्रहेभ्यः क्षेत्रपालाय च सदीपमाषभक्तबलीन् संकल्प्य यजमानद्वारा कारयेत् ।

प्रातार इन्द्र गगस्त्रिप् इन्द्रप्रीत्यर्थे बलिदाने त्रिनियोमण्ड

**ॐ त्रातारमिन्द्रमवितारमिन्द्रं हवे सुहवंशूरमिन्द्रम् ।**
**ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्तिनो मघवो धात्विन्द्रः ॥**

ये केचित् ग्रहयज्ञेऽस्मिन् आगताबलिकाङ्क्षिणः ।
तेभ्यो बलिं प्रयच्छामि नमस्कृत्य पुनः पुनः ।।

भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।।

बलिं गृण्हत्विमे देवा आदित्यावसवस्तथा ।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगाः स्वगाः (स्वगाः) ।।
असुरायातुधानाश्च पिशाचोरगराक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ।।
जृम्भकाः सिद्धगन्धर्वाः नागाविद्याधरानगाः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।।
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ।
माविघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।।
सौम्या भवन्तु तृप्ताश्च भूतप्रेतासुखावहाः ।।
इति पठन् गृहाद्बहिः उत्तरभागे बलिं निक्षिपेत् ।

यजमानः पत्नीसहितः पाणिपादौ प्रक्षाल्य आचान्तः गृहं प्रविष्य ।। इमं मन्त्रं पठेत् ।

शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नोदेव्यभयं अस्तु । शिवा दिशः प्रदिश उदिशो न आपो विद्युतः परिपान्तु सर्वतः शान्ति शान्ति शान्तिः ।।

पृथिवी शान्ता इत्यादि मन्त्रं पठन् भुवं प्रोक्ष्यसमजमानः आचार्यः पाणिपादौ प्रक्षाल्यं आचान्तः ।।

## अथ पूर्णाहुतिः

'पूर्णाहुत्यां मृडो नाम' इति वचनमनुसृत्य पूर्णाहुतिकाले स्थापितग्नौ मृडनामकमग्निं प्रतिष्ठायामि इत्यनुसन्धाय अक्षतान् क्षिपेत् । द्वादशाष्टौ चतुर्गृहीतेन वा आज्येन स्रुचं पूरयित्वा समुद्रादूर्मिरिति-सूक्तेन पूर्णाहुतिं जुहुयात् ।।

**शते आज्याहुतिं दद्यात् सहस्रेऽश्वत्थपूगकम् ।**
**अयुते नारिकेलं स्यात् कूष्माण्डं लक्षहोमके ।।**

इति वचनात् हवनसङ्ख्यानुसारेण पूर्णफलं निदध्यात् ।

तत्र क्रमः पात्रे नवशूर्पे वा पूर्णाहुतिफलं निधाय (फले शङ्खचक्रं अङ्कयित्वा) विभवानुसारेण सौभाग्यद्रव्यैः गन्धपुष्पाक्षतवस्त्र-हिरण्यादिभिः अलङ्कृत्य मृडान्तर्गत भारतीरमण मुख्यप्राणान्तर्गत सङ्कर्षणाय नम इत्युपचारैः सम्पूज्य तं पूर्णफलं स्रुवपात्रोपरि शूर्पे वा निधाय जुहुयात् । इति क्रमः ।।

समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमो वामदेवो अग्निस्त्रिष्टुप् अन्त्या जगती भागवतदशमस्कन्धपूर्णाहुतिहोमे विनियोगः ।।

ॐ समुद्रादूर्मिमधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः
॥ १ ॥

वयं नाम प्र ब्रवामा घृतस्याऽस्मिन्
यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं
चतुःशृङ्गोऽवमीद् गौर एतत् ॥ २ ॥

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश
॥ ३ ॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः
॥ ४ ॥

एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य
आसाम् ॥ ५ ॥

सम्यक् स्रवन्ति सरितो न धेना
अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा
इव क्षिपणोरीषमाणाः ॥ ६ ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः
पिन्वमानः ।। ७ ।।

अभि प्रवन्त समनेव योषाः
कल्याण्य१ः स्मयमाना सो अग्निम् ।
घृतस्य धाराः समिधो नसन्त
ता जुषाणो हर्यति जातवेदाः ।। ८ ।।

कन्या इव वहतुमेतवा उं अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते
।। ९ ।।

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते
।। १० ।।

धामन् ते विश्वं भुवनमधि
श्रितमन्तः समुद्रे हृद्य१न्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम
मधुमन्तं त ऊर्मिं स्वाहा ।।
अग्न्य इदं न मम ।। (ऋ.सं.०४,५८,१-११ पृ.सं.२७८)

विज्योतिषेत्यस्य जारो वृषोऽग्निस्त्रिष्टुप् पूर्णाहुति शेषाज्यहोमे विनियोगः ।

**ॐ विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षेस्वाहा ।।**

**अग्नय इदं न मम ।। (५/१/९ पृ.२८०)**

अस्मिन् भागवतदशमस्कन्धहोमाख्यकर्मसाङ्गतासिध्यर्थं सर्वप्रायश्चित्तं करिष्ये । ॐ भूर्भुवः स्वः स्वाहा प्रजापतये श्रीवासुदेवाय इदं न मम ।।

संस्रावेण विश्वेभ्यो देवेभ्यस्वाहा समस्रावभाग्भ्यो विश्वेभ्योदेवेभ्य इदं न मम ।। इति पूर्णाहुतिं हुत्वा ।

**पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णाहुतिः । सर्वमेवाप्नोति । अथो इयं वै पूर्णाहुतिः । अस्यामेव प्रतितिष्ठति । इति शंसनं कृत्वा । ततः प्रणीता विमोकादिकं कुर्यात् ।**

हविः शेषमुदगुद्वास्य बर्हिषि पूर्णपात्रं निनयेत् ।

**ॐ पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः । सदसिसन्मे भूयाः । सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मामे भूयिष्ठाः ।।**

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । (अप उपस्पृश्य) प्रतीच्यांदिशि ग्रहाः

पशवो मार्जयन्ताम् । उदीच्या दिशि आप औषधि वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरप्रजापतिर्मार्जयन्ताम् ।

आपो अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् मार्जने विनियोगः ।

**ॐ आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**
**विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि ॥**

इदमापः सिन्धुद्वीप आपो नुष्टुप् मार्जने विनियोगः । (१०/१७/१० पृ.६३९)

**ॐ इदमापः प्र वहत यत्किं च दुरितं मयि ।**
**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥**
**आपो अद्यान्व चारिषं रसैन समगस्महि ।**
**पयस्वानग्न आ गहि तं मा संसृज वर्चसा ॥**

(१/२३/२२ पृ.१२)

**सुमित्र्यान आप ओषधयः सन्तु ।**
**दुर्मित्र्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मि ॥**

इति नैरुत्यांदिशि कुशाग्रैरपः सिंचेत् ।

**ॐ माहं प्रजां परासिचयानः स यावरीः स्थन । समुद्रेवो निनयानि स्वं पाथो अपीथ ॥**

ता आपः समुद्रं गच्छेयुरिति चिन्तयन् गङ्गायमुनासरस्वतीः स्मरन् अञ्जलिस्थदर्भैरात्मानमन्यांश्च मार्जयेत् ।

ततः अग्नेर्वायव्यदेशे तिष्ठन् अग्नेत्वन्न इति चतसृणां गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकैकर्चा ऋषयः अग्निर्देवता द्विपदाविराट् छन्दः अग्न्युपस्थाने विनियोगः ।

**ॐ अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।**
**वसुरग्निर्वसुश्रवा अच्छा न क्षि द्युमत्तमं रयिं दाः ।।**
(५/२४/१)

**स नो बोधि श्रुधीहव मुरुष्याणो अघायतः समस्मात् ।**
**तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।।**

उपविष्य प्रागादिपरिस्तरणान्युत्तरे विसृजेत् । परिसमूहनपर्युक्षणे कृत्वा, विश्वानिन ...... इति अग्निं गन्धपुष्पादिभिः पूजयित्वा ।

**ॐ अग्निस्तुविश्रवस्तमं तु विब्रह्माणमुत्तमम् ।**

**अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ।।** ९५/२५/५ पृ.२९३)

**अग्निर्ददाति सत्पतिं सासाहयो युधा नृभिः ।**
**अग्निरत्यं रघुष्यदं जेतारमपराजितम् ।। ६ ।।**

पशवो मार्जयन्ताम् । उदीच्या दिशि आप औषधि वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरप्रजापतिर्मार्जयन्ताम् ।

आपो अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् मार्जने विनियोगः ।

**ॐ आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि ।।**

इदमापः सिन्धुद्वीप आपो नुष्टुप् मार्जने विनियोगः । (१०/१७/१० पृ.६३९)

**ॐ इदमापः प्र वहत यत्किं च दुरितं मयि ।**
**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।।**
**आपो अद्यान्वं चारिषं रसेन समगस्महि ।**
**पयस्वानग्न आ गहि तं मा संसृज वर्चसा ।।**

(१/२३/२२ पृ.१२)

**सुमित्र्यान आप ओषधयः सन्तु ।**
**दुर्मित्र्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मि ।।**

इति नैरुत्यांदिशि कुशाग्रैरपः सिंचेत् ।

**ॐ माहं प्रजां परासिचयानः स यावरीः स्थन । समुद्रेवो निनयानि स्वं पाथो अपीथ ।।**

ता आपः समुद्रं गच्छेयुरिति चिन्तयन् गङ्गायमुनासरस्वतीः स्मरन् अञ्जलिस्थदर्भैरात्मानमन्यांश्च मार्जयेत् ।

ततः अग्नेर्वायव्यदेशे तिष्ठन् अग्नेत्वन्न इति चतसृणां गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकैकर्चा ऋषयः अग्निर्देवता द्विपदाविराट् छन्दः अग्न्युपस्थाने विनियोगः ।

**ॐ अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।**
**वसुरग्निर्वसुश्रवा अच्छा न क्षि द्युमत्तमं रयिं दाः ।।**
(५/२४/१)

**स नो बोधि श्रुधीहव मुरुष्याणो अघायतः समस्मात् ।**
**तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।।**

उपविष्य प्रागादिपरिस्तरणान्युत्तरे विसृजेत् । परिसमूहनपर्युक्षणे कृत्वा, विश्वानिन ...... इति अग्निं गन्धपुष्पादिभिः पूजयित्वा ।

**ॐ अग्निस्तुविश्रवस्तमं तु विब्रह्माणमुत्तमम् ।**

**अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ।।** ९५/२५/५ पृ.२९३)

**अग्निर्ददाति सत्पतिं सासाहयो युधा नृभिः ।**
**अग्निरत्यं रघुष्यदं जेतारमपराजितम् ।। ६ ।।**

अग्नये नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ।

विभूतिग्रहणम् ।

**अभिषेकः**

ततः सर्वौषधैः सर्वगन्धैश्चविलिप्ताङ्गं प्राङ्मुखं सपरिवारं यजमानं उदङ्मुखाविप्राः ऐशानीमुखा वा स्थापितकुम्भोदकेन 'समुद्रज्येष्ठा स्वादिष्टयादि अभिषेकमन्त्रैः अभिषिञ्चेयुः ।

मानस्तोक इत्यस्य कुत्सो रुद्रो जगती विभूतिग्रहणे विनियोगः ।

**ॐ मानस्तोके तनये मान आयौ मा नो गोषु मा नो अश्वेषु रिरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित् त्वा हवामहे ।। (१/११४/८ पृ.८४)**

त्र्यायुषं जमदग्नेरिति ललाटे । कश्यपस्य त्र्यायुषं कण्ठे । अगस्त्यस्य त्र्यायुषं नाभौ । यद्देवानां त्र्यायुषं दक्षिणस्कन्धे । तन्मे अस्तु त्र्यायुषं वामस्कन्धे । सर्वमस्तु शतायुषमिति शिरसि धारयेत् । यजमानः शिष्टानुसारेण कार्यम् ।

**ॐ च मे स्वरश्च मे यज्ञोपचते नमश्च । यत्ते न्यूनं तस्मै त उपयत्तेतिरिक्तं तस्मै ते नमः । अग्नये नमः । ॐ स्वस्ति ।**

**श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।**

**आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ।**
**श्रियं देहि मे हव्यवाहन ॐ नम इति ।।**

**प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।**
**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।।**

**प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै ।**
**यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ।।**

**यस्य स्मृत्या च नामोक्त्या तपो यज्ञः क्रियादिषु ।**
**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।**

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं रमापते ।**
**यत्कृतं तु मया देव परिपूर्णं तदस्तु मे ।।**

अनेन श्रीमद्भागवतदशमस्कन्धहोमाख्यकर्मणा भगवानग्रन्तर्गत भारतीमुख्यप्राणान्तर्गत दक्षिणापतियज्ञपुरुषाभिन्न श्रीहरिणीपति-परशुरामः प्रीयतां प्रीतो भवतु ।।

## अथ श्रेयोग्रहणम्

श्रेयोग्रहो दक्षिणादिः इति वाक्यात् यजमानेन श्रेयोग्रहणं आचार्येण श्रेयोदानं च कारयेत् ।

ततो वरणक्रमेण ऋत्विजो यजमानहस्ते श्रेयः सम्पादनं कुर्युः । यजमानः आचार्यादिभ्यः श्रीमद्भागवतदशमस्कन्धहवनाख्यकर्मणः

श्रेयोग्रहणं करिष्ये इति संकल्प्य । आचार्यः शिवा आपः सन्तु । इति सपत्नीकयजमानहस्ते जलं क्षिपेत् । सौमनस्यमस्तु इति पुष्पम् । अक्षतं चारिष्टं चास्तु इति अक्षतान् । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु इति पुनर्जलम् । भवन्नियोगेन मया अस्मिन् श्रीमद्भागवतदशमस्कन्धहवनाख्यकर्मणि यत्कृतं जपपारायण अर्चनहवनादि तदुत्पन्नं गुरुदेवतामध्वेशश्रीकृष्णस्य अत्यर्थप्रसाद-कारणीभूतयत् श्रेयः तत् तुभ्यमहं सम्प्रददे । तेन त्वं श्रेयस्वी भव । स च तथास्तु इति वदेत् । एवं ब्रह्मादयः । ततो ब्रह्मादिऋत्विग्भ्यो यथा शक्तिदक्षिणां दद्यात् । ततोऽग्नेः पश्चिमतः आचार्यं सम्पूज्य सवत्सां गां पयस्विनीं दद्यात् ।

स्थापितदेवान् उत्तरपूजां कुर्यात् । स्थापितदेवान् पञ्चोपचारैः सम्पूज्य ।

**ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतः मरुतः सुदानव इन्द्र प्राशुर्भवा सचा ।। (१/४०/पृ.२६)**

**ॐ अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु । अवतस्य विसर्जने ।। (८/७२/११ पृ.५३६)**

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवम् । इष्टकाम्यार्थसिद्ध्यर्थं पुनरागमनाय च ।। इति देवान् विसृज्य प्रधानदेवतापीठं ग्रहपीठं आचार्याय सदक्षिणाकं च दद्यात् ।

ततः आदित्यादिनवग्रहपीत्यर्थं तत्तद्ग्रहधान्यानि नानानामगोत्रेभ्यः ब्राह्मणेभ्यो दद्यात् ।

दिवाकरस्य गोधूमाः तण्डुलाशशिनस्तथा ।। आढका भूमिजस्यैव मुद्राः शशिसुतस्य च । बृहस्पतेस्तु चणकाः निष्पावा भार्गवस्तथा ।। तिलाः शनैश्चरस्यैव राहोमाषस्तथैव च । कुलित्थं केतुधान्यस्यान्नव-धान्याः प्रकीर्तिताः ।। ततो भूयसीं दक्षिणां दद्यात् ।।

श्रीकृष्णादिप्रतिमायां तत्वमातृकोपसंहारपूर्वकं विसृजेत् । ततो अग्निविसर्जनम् ।।

गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवा तत्र गच्छ हुताशन ।। इति अग्निं विसृज्य कर्मसाङ्गतासिद्ध्यर्थं यथाशक्तिब्राह्मणान् भोजयित्वा तैराशिषो गृह्णीयात् । ब्राह्मणाः महाशान्तिं पठेयुः । कृतस्य कर्मणः भगवति समर्पणम् ।

**शतं जीव शरदो वर्धमानः शतं हैमन्ताञ्छतमं वसन्तात् । शतमिन्द्राग्नो सविता बृहस्पतिः शतायुषे हविषेमं पुनर्दुः आहार्षं त्वाविदं त्वा पुनरागो पुनर्नव ।**

**सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ।।**

**भगवत्समर्पणम्**

**कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुस्रतः स्वभावम् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेतत् ।।**

इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ।।

यज्ञेशाच्युतगोविन्द माधवानन्तकेशव ।
कृष्णविष्णो हृषीकेश वासुदेव नमोऽस्तु ते ।।

एकोऽपि कृष्णस्य कृतप्रणामः दशाश्वमेधावभृतेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ।।

स्थित्वा मत्संस्थ देवेषु य इमामर्चनां व्यधात् ।
समर्प्य स्वकृतां स्वस्मिन् प्रीयतां स्वयमेव सः ।।

को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेष्वपि त्रिष्वपीह ।
तथाऽपि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोज निषेवणादृते ।।

यस्ते कथासेवक एव सर्वदा सदारतिस्त्वय्यचलैकभक्तिः ।
स जीवमानो न परः कथञ्चित् तज्जीवनं मे स्त्वधिकं
समस्तात् ।।

प्रवर्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा ।
अनुग्रहस्ते मयि चैव मेव निरौपधौ तौ मम सर्वकाम ।।

दिने दिने तत्र महान्नपर्वताः सभक्षसाराररसवन्तऊर्जिताः ।
नद्यः पयः सर्पिरजस्रपूर्णाः समाक्षिकाद्या अपि पायसह्रदाः
।। १३५ ।।

हृदा महान्तस्त्रिदशादियोग्याः सुयोगयुक्ता हरिचन्दनादेः ।
तथाऽञ्जनालक्तकमुख्यमण्डनद्रव्याग्र्यवाप्यो
मणिकाञ्चनोद्भवाः ।।

यथेष्टपानाशनभोगशिष्टाः सहस्रशो मारुतिना तु कारिताः ।
गन्धा रसाद्याश्च समस्तभोगा दिवीव तत्राऽसुरतीवहृद्याः ।।

नैतादृशः कश्चन भूतपूर्वो मखा विना रामविरञ्चिवज्रिणाम् ।
मखानिति प्रोचुरशेषलोका दृष्ट्वा मखं तं पुरुषोत्तमेरितम् ।।

स एवमद्धा हरिदैवतः क्रतुः पञ्चाश्वमेधात्मक उच्चकल्पः ।
दिने दिने स्ववृद्धगुणो बभूव मुदावहो वत्सरपञ्चकत्रयम् ।।

यज्ञावसाने निखिलाश्च पाण्डवाः कृष्णा च पृथ्वीमखिलां सवित्ताम् ।

माङ्गल्यमात्रं दयिताशरीरे निधाय सर्वाभरणानि चैव ।
समर्पयामासुरजे वरेण्ये व्यासे विभागाय यथोक्तमृत्विजाम् ।।
प्रियो विभागो यदमुष्य विष्णोरतो विभागार्थमिवोर्पयंस्ते ।
हृदा समस्तं हरये प्रितं तैः स हि द्विजस्थोऽपि समस्तकर्ता ।।
देहेन्द्रियप्राणमनांसि चेतनैः सहैव तस्मा अतिसृज्य नेमुः ।
त्वदीयमेतन्निखिलं वयं च नत्वस्मदीयं क्वचकिञ्चनेश ।
स्वतन्त्र एकोऽसि न कश्चिदन्यः सर्वत्र पूर्णोऽसि सदेति हृष्टाः ।।
म.भा.ता.नि.३०/१४२

यत्सम्बन्धेन कर्माणि फलवन्ति भवन्ति हि ।
यः सर्वकर्मणां कर्ता तस्मै भगवते नमः ।।

य इज्यते विधीशानशक्रपूर्वैः सदामखैः ।
रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ।।

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।
तेन त्वदङ्घ्रिकमले रतिं मे यच्छ शाश्वतीम् ।।

अक्षयं कर्म यस्मिन् परे स्वर्पितं
प्रक्षयं यान्ति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदैवामृतः
कुक्षिगं यस्य विश्वं सदाऽजादिकम् ।।

प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ।।

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रं नामसङ्कीर्तनं तव ।।

स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ।।

यस्य स्मृत्या च नामोक्त्या तपः पूजाक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं रमापते ।**
**यत् कृतं तु मया देव परिपूर्णं तदस्तु मे ।।**

अनेन दशमस्कन्धहवनकर्मणा भगवान् यज्ञपुरुषाभिन्नहरणी-परशुरामाभिन्नरुक्मिणीसत्यभामासमेत श्रीकृष्णः प्रीयतां प्रीतो वरदो भवतु ।

**इत्यादिप्रमाणार्थानि मनस्यनुसन्धाय हरिस्मरणपूर्वकं हर्य-र्पितानि कर्माणि सफलानि भवन्ति इत्यशेषमतिमङ्गलम् । यजमानः हृष्टमनाः बन्धुजनैः सह भुञ्जीत ।।**

यजुःशाखिनां विशेषः–

प्रयोगसङ्कल्पादिकं पूर्ववत् । तदङ्गभूतं पुण्याहादि नान्दीश्राद्ध ऋत्विग्वरणान्तं कृत्वा प्रादेशकरणान्ते । श्रीकृष्णस्थापनपूजनादि ऋक्शाखिवत् कार्यम् । ततो यजनदेशे आचार्यः कुण्डस्थण्डिलंगोमयो ल्लेखनादि, स्वाहाभारतीलक्ष्मीध्यानान्तं कृत्वा विष्णुवीर्यात्मकमग्निं प्रतिष्ठाप्य षोडशसंस्कारसिद्धिं अग्नौ पीठपूजां विधाय परशुराममावाह्य अर्घ्यादिपुष्पान्तोपचारैः पूजयित्वा आवरणपूजां च कृत्वा धूपदीपौ दत्वा नैवेद्यं समर्प्य वैष्णवत्वसिद्धिहोमं कृत्वा चत्वारिशृङ्गेति सम्मुखोभव इत्यन्तम् । त्रिस्त्रिः समार्ष्टि इत्यादि अलङ्करणान्ते । दक्षिणोत्तरपरिस्तरणादि समं पूर्वेण यथोपदेशं प्रधानाहुतीर्हुत्वा इत्यन्तम् । गणानां त्वा इति वराहुतिः । प्रधानहोमान्ते

अनुयाजसमिधं इध्मसन्नहनं च हुत्वा । जयादिप्रायश्चित्तहोमान्ते लोकपालेभ्यः क्षेत्रपालाय च बलीन् संकल्प्य यजमानद्वारा कारयेत् । अग्नेः सप्तते इति पूर्णाहुतिः । यजमानाभिषेकः । यथाचारं विभूति-धारणम् । श्रेयोग्रहणं दानादि । उत्तरपूजा यान्तु देवेति । गच्छ गच्छ इति अग्निविसर्जनम् । यस्य स्मृत्येति समर्पणम् ।। इति यजुःशाखिनां प्रयोगः सङ्क्षेपः । इति श्रीमद्भागवतदशमस्कन्ध-हवनपद्धतिः समाप्ता ।।

**अथ श्रीकृष्णषडक्षरमन्त्रजपः क्रमः ।**

आचम्य प्राणानयम्य देशकालौ सङ्कीर्त्य भारतीरमणमुख्य-प्राणान्तर्गत श्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं श्रीकृष्णषडक्षरमन्त्रजपं करिष्ये । इति सङ्कल्पः ।।

**करशुद्धिः**

तत्वन्यासमातृकान्यासांश्च कार्यः ।

अथ गुरुनमस्काराः । श्रीगुरुभ्यो नमः । श्रीपरमगुरुभ्यो नमः । श्रीमदानन्दतीर्थभगवत्पादाचार्यगुरुभ्यो नमः । श्रीवेदव्यासाय नमः । श्रीभारत्यै नमः । श्रीसरस्वत्यै नमः । श्रीवायवे नमः । श्रीब्रह्मणे नमः । श्रीमहालक्ष्मै नमः । श्रीनारायणाय नमः । एकादशस्थाने उपास्यदेवतायै श्रीकृष्णमन्त्रप्रतिपाद्य श्रीकृष्णाय नमः । मोक्षप्रदश्रीवासुदेवाय नमः ।। इति गुरुनमस्काराः ।।

ॐ क्लीं कृष्णाय नमः स इति मन्त्रेण १२ वारं प्राणायामः ।

अथ करन्यासः– ॐ पूर्णज्ञानात्मने अङ्गुष्ठाभ्यां नमः । ॐ पूर्णैश्वर्यात्मने तर्जनीभ्यां नमः । ॐ पूर्णप्रभात्मने मध्यमाभ्यां नमः । ॐ पूर्णानन्दात्मने अनामिकाभ्यां नमः । ॐ पूर्णतेजात्मने कनिष्ठिकाभ्यानमः । ॐ पूर्णशक्त्यात्मने करतलकरपृष्ठाभ्यां नमः ।।

अथ अङ्गन्यासः– ॐ क्लीं हृदयायनमः । ॐ कृष्णाय शिरसे स्वाहा । ॐ नमः शिवायै वौषट् । ॐ क्लीं कवचाय हुम् । ॐ कृष्णाय नेत्राभ्यां वौषट् । ॐ नमः अस्त्राय फट् । इति दिग्बन्धः ।।

अस्य श्रीकृष्णषडक्षरमन्त्रस्य ब्रह्मा ऋषिः शिरसि । गायत्रीछन्दः मुखे । श्रीकृष्णो देवता हृदये । श्रीकृष्णदेवताप्रीत्यर्थे ध्याने विनियोगः ।

अथ श्रीकृष्णध्यानम् – ध्यायेत् हरिन्मणिनिभं जगदेकवन्द्यं सौन्दर्यसारमरिशङ्खवराभयानि ।

धोर्भिदधानमजितं सरसं च भैष्मी सत्यासमेतमखिल-प्रदमिन्दिरेशम् ।।

इति ध्यात्वा ॐ क्लीं कृष्णाय नमः ॐ इति मन्त्रेण १०८ वारं अथवा १००८ वारं जपेत् । पुनः न्यासं ध्यानं च पूर्ववत् उपसंहारः

कृत्वा अनेन श्रीकृष्णषडक्षरमन्त्रजपेन भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णः प्रीयतां प्रीतो वरदो भवतु ॥

गोक्षीरफलपुष्पाक्षतैस्तर्पणं जपदशांशेन कार्यम् । ॐ क्लीं कृष्णाय नमः ॐ श्रीकृष्णं तर्पयामि । अनेन तर्पणेन भारतीरमण-मुख्यप्राणान्तर्गतश्रीकृष्णः प्रीयतां प्रीतो वरदो भवतु । श्रीकृष्णार्पणमस्तु ।

**अथ श्रीमद्भागवतदशमस्कन्धहवनोपयुक्तविषयाः**

अग्रजस्रधारणपक्षे यावत्सप्ताहसमाप्तिः तावत्पर्यन्तं प्रतिदिनं यथावकाशं जुहुयात् । अध्यायसमाप्तिकाले उवाच स्थले च मूलमन्त्रेण फलपुष्पाज्यादिकं जुहुयात् । परं प्रत्यहं स्विष्टकृद्धोमो नास्ति । सम्पूर्णप्रधानहोमानन्तरमेव स्विष्टकृद्धोमः । प्रतिदिनं होमा-रम्भे अग्निं प्रज्वाल्य चत्वारिशृङ्गा इत्यादि मुख्यप्राणलक्ष्मीपरशुराम-ध्यानान्ते अग्नलङ्करणपीठपूजां कृत्वा परशुरामं आवहनादिपुष्प-पूजांजल्यन्ते उत्तरश्लोकमारभ्य होमारभः कार्यः । विशेषहोमकरणे श्रीमद्भागवत प्रतिपाद्यदेवताहोमः ततन्मन्त्रेण तत्तद्देवताध्यानपूर्वकं जुहुयादिति विशेषः । नित्यहोमसमाप्तौ यथावकाशं भागशः कृतेन दशमस्कन्हवनकर्मणा भगवान् यज्ञपुरुषान्तर्यामी श्रीहरिणीपति-परशुरामः प्रीयतां प्रीतो भवतु ॥ श्रीकृष्णार्पणमस्तु ॥

अग्निपूजां कृत्वा यस्यस्मृत्येति ..... विष्णवर्पणं कुर्यात् । प्रत्यहं स्विष्टकृद्धोमपक्षे तथैव कर्तव्यः । प्रीतिनित्यं अग्निस्थापनादि स्थाली-पाककार्यं तथैव कार्यम् । भागशः कृतहोमसमाप्तौ स्विष्टकृद्धोमः कार्यः ।।

## श्रीमद्भागवतप्रतिपाद्यभगवदवताराणां ध्यानश्लोकाः ।

### १ परशुरामध्यानम्

**अङ्गारवर्णमभितोऽण्डबहिःप्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।**
**ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयन्तम् ।।**

ॐ भां भार्गवाय नमः स्वाहा ।

### २ वेदव्यासध्यानम्

**विज्ञानरोचिः परिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।**
**तर्काभयेतं विधिशर्वपूर्वगिर्वाणविज्ञानदमानतोऽस्मि ।।**

ॐ व्यां वेदव्यासाय नमः स्वाहा इति मन्त्रः ।

### ३ श्रीकृष्णध्यानम्

**ध्यायेत् हरिन्मणिनिभं जगदेकवन्द्यं**
**सौन्दर्यसारमरिशङ्खवराभयानि ।**
**दोर्भिधानमजितं सरसं च भैष्मी**
**सत्यासमेतमखिलप्रदमिन्द्रिरेशम् ।**

ॐ क्लीं कृष्णाय नमः स्वाहा इति अथवा ॐ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा इति मन्त्रः ।

## ४ मत्स्यरूपध्यानम्

**भवान् युगांतार्णव ऊर्मिमालिनि**
**क्षोणीमिमां ओषधिवीरुधां निधिम् ।**
**मया सहोरुक्रमतेज ओजसा तस्मै**
**जगत्प्राणगणात्मने नमः ।।**

ॐ नमो भगवते मुख्यतमाय नमः सत्वाय प्राणयौजसे बलाय महामत्स्याय नमः स्वाहा ।

ॐ मं मत्स्याय नमः स्वाहा इति मन्त्रः ।

## ५ कूर्मरूपध्यानम्

**यद्रूपमेतत् निजमाययार्पितं अथस्वरूपं बहुरूपरूपितम् ।**
**सङ्ख्या न यस्यास्त्ययथोपलम्भनात् तस्मै**
**नमस्तेऽव्यपदेशरूपिणे ।।**

ॐ नमो भगवते अकूपाराय सर्वसत्वगुणविशेषणाय अनुपलक्षित-स्थानाय नमो वर्ष्मणे नमो भूम्ने नमोऽवस्थानाय नमस्ते स्वाहा ।

## ६ वराहरूपध्यानम् ।

**शामः सुदर्शनदराभयसद्वरेतो**
**भूम्यायुतोऽखिल निजोक्तपरिग्रहैश्च ।**
**ध्येयो निजैश्च तनुभिः सकलैरुपेतो**
**कोलो हरिः सकलवाञ्छित सिद्धयेऽजः ।।**

ॐ हूं नमो भगवते वराहरूपाय भूभुवस्वःपतये भूपतित्वं मे देहि ददापय स्वाहेति ।

हूं वं वराहाय स्वाहेति वा इति सङ्क्षेपः ।

## ७ नृसिंहरूपध्यानम् ।

**ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं, जानुप्रसक्तकरयुग्ममथापराभ्याम् । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोट्यधिकतेजसमस्त-शक्तिम् ।।**

ॐ जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा । ॐ क्षं नृसिंहाय नमः स्वाहा इति द्वितीयमन्त्रः ।

अथवा

ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतो मुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।। इति मन्त्रम् ।

## ८ रामध्यानम्

श्यामंखीन्द्वमितदीधितिकान्तियुक्तं
ज्ञानं शरं च दधतं प्रियया समेतम् ।
स्वात्मस्वरूपममितं हनुमन्मुखेषु
सन्दर्शयन्तममितं स्मरतोरुगीर्भिः ।।

ॐ रां रामाय नमः स्वाहा ।

## ९ वामनरूपध्यानम्

उद्यद्रविप्रभमरीन्द्रदरौ गदां च ज्ञानं च
विभ्रतमजं प्रियया समेतम् ।
विश्वावकाशमभितः परिपूरयन्तं
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ।।

ॐ वां वामनाय स्वाहा ।

## १० त्रिविक्रमगायत्रीमन्त्रः

ध्यानं– उद्यद्रविप्रभमरीन्द्रदरौ गदां च, ज्ञानं च विभ्रतमजं प्रियया समेतम् ।

विश्वावकाशमभितः परिपूरयन्तं, भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ।।

ॐ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि तन्नो विष्णुः प्रचोदयात् स्वाहा ।

## ११ कपिलध्यानम्, १२ दत्तत्रेयध्यानम्

प्रोद्यद्दिवाकरसमानतनुं सहस्रं
सूर्योरुदिधीतिभिराप्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ।।

ॐ कं कपिलाय नमः स्वाहा । ॐ दं दत्तात्रेयाय नमः स्वाहा ।

## १३ ऋषभध्यानम्

नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ।
लोकस्य यः करुणया उभयात्मलोकं आख्यन्नमो भगवते ऋषभाय तस्मै ।।

अथवा प्रोद्यद्रवीन्दुदहनाधिककान्तिकान्तं
साऽभीतिपद्मवरबोधभुजं विदोषम् ।
सत्कामपूरमृषभं परमं गुणाब्धिं ध्यायेत्
प्रसन्नवदनं सदयावलोकम् ।।

ॐ ऋषभाय नमः स्वाहा ।

## १४ महिदासध्यानम्

तुभ्यं च नारद भृषं भगवान्
विवृद्धभावेन साधुपरितुष्ट उवाच योगम् ।
ज्ञानं च भागवतमात्मसुतत्त्वदीपं
यद्वासुदेवशरणाः विदुरंजसैव ।।

निर्दोषमब्जमुखलक्ष्मलसत्पदाब्जं
साऽभीतिवेदवरतर्ककरं गुणाढ्यम् ।
मह्यादिदासमतसीकुसुमावभासं
सत्यासमेतमितराजयजे स्मरेत् ।।

ॐ महिदासाय नमः स्वाहा ।

## १५ हयग्रीवध्यानम्

वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं
चन्द्रवदातममृतात्मकरैः समंतात् ।
अण्डान्तरं बहिरपि प्रतिभासयन्तं
शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ।।

नस्तो मुखादपिनिरन्ततरमुद्गिरन्तं
विद्या अशेषत उताब्जभवेमुख्यैः ।
संसेव्यमानमतिभक्तभरावनम्रैः
लक्ष्म्मयामृतेन सततं परिषिच्यमानम् ।।

ॐ हां हयग्रीवाय नमः स्वाहा ।

## १६ धन्वन्तरिध्यानम्

**चन्द्रौघकान्तिममृतात्मकरैर्जगन्ति**
**सञ्जीवयन्तममितात्मसुखं परेशम् ।**
**ज्ञानं सुधाकलशमेव च सन्दधानं**
**शीतांशुमण्डलगतं स्मरतात्मसंस्थम् ॥**

मूध्र्नि स्थितादमुत एव सुधां स्रवन्तीं भ्रूमध्यगाच्च तत् एव च तालुसंस्थात् ।

हार्दाच्च नाभिसदनादधरस्थिताच्च, ध्यात्वाभिपूरिततनुर्दुरितानि हन्यात् ॥

स धं धन्वन्तरयेनमः स्वाहा ।

## नरनारायणध्यानम्

**कर्तास्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः ॥**
**द्रष्टुर्नदृग्यस्य गुणैर्विदुष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥**

ॐ नमो भगवते अथमशीलाय उदरतशीलाय उपरतानात्म्याय नमोऽकिञ्चनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसगुरवे आत्मारामाधिपतये नमो नमः स्वाहा ॥ इति विस्तार होमपक्षे होमः कार्यः ॥

## अथ श्रीमद्भागवतदशमस्कन्धहवनविधिः

पद्मपुराणे उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये षष्ठाध्याये उक्तः ।

विरक्तश्चेद्भवेत् श्रोता गीता वाच्यां परेऽहनि ।
गृहस्थश्चेत्तदा होमः कर्तव्यं कर्मशान्तये ।। ५९ ।।

प्रतिश्लोकं तु जुहुयात् विधिना दशमस्य च ।
पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ।। ६० ।।

अथवा हवनं कुर्यात् गायत्र्याः सुसमाहितः ।
तन्मयत्वात् पुराणस्य परमस्य च तत्वतः ।। ६१ ।।

होमाशक्तौ बुधो हौम्यं दद्यात् तत्फलसिद्धये ।
नानाच्छिद्रनिरोधार्थं न्यूनताधिकतानयोः ।। ६२ ।।

दोषयोः प्रशमार्थं च पठेन्नाम सहस्रकम् ।
तेन स्यात् सत्फलं सर्वं नास्त्यस्मादधिकं यतः ।। ६३ ।।

द्वादशब्राह्मणान् पश्चात् भोजयेन्मधुपायसैः ।
दद्यात् सुवर्णं धेनुं च व्रतपूर्णत्व हेतवे ।। ६४ ।।

शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ।
तत्रास्य पुस्तकं स्थाप्य लिखितं ललिताक्षरम् ।। ६५ ।।

सम्पूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ।
वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ।। ६६ ।।

आचार्याय सुधीर्दत्वा मुक्तः स्याद्भवबन्धनैः ।
एवं कृते विधाने च सर्वपापनिवारणे ।। ६७ ।।

फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ।
धर्मकामार्थमोक्षाणां साधनं स्यान्न संशयः ।। ६८ ।।

।। इति श्रीमद्भागवतमाहात्म्ये षष्ठाध्याये
दशमस्कन्धविधिः समाप्तः ।।

## अथ श्रीकृष्णाष्टोत्तरनामस्तोत्रम् ।

श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।
वसुदेवात्मजः पुण्यलीलामानुषविग्रहः ।। १ ।।

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ।। २ ।।

देवकीनन्दनः श्रीशो नन्दगोपः प्रियात्मजः ।
यमुनावेगसंहारी बलभद्रः प्रियानुजः ।। ३ ।।

पूतनाजीवितहरः शकटासुरभञ्जनः ।
नन्दव्रजजनान्दः सच्चिदानन्दविग्रहः ।। ४ ।।

नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः ।
नवनीतनवाहारो मुचुकुन्दप्रसादकः (कृत्) ।। ५ ।।

षोडशस्त्रीसहस्रेशस्त्रिभङ्गी मधुराकृतिः ।
शुकवागमृताब्धीन्दुः गोविन्दो योगिनां पतिः ।। ६ ।।

वत्सपादहरोऽनन्तो धेनुकासुरभञ्जनः ।
तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥ ७ ॥

उत्तालतालभेत्ता च तमालश्यामलाकृतिः ।
गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥ ८ ॥

इलापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ॥ ९ ॥

गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः ।
अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥ १० ॥

मधुरा मधुरानाथो द्वारकानायको बली ।
वृन्दावनान्तः सञ्चारी तुलसीधामभूषणः ॥ ११ ॥

स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ।
कुब्जागन्धानुलिप्ताङ्गो मायी परमपूरुषः ॥ १२ ॥

मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ॥ १३ ॥

अनादिब्रह्मचारी च कृष्णाव्यसनकर्षकः ।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥ १४ ॥

विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक् सत्यसङ्कल्पः सत्यभामारतो जयी ॥ १५ ॥

सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥ १६ ॥

वृषभासुरविध्वंसी बाणासुरकरान्तकः ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ १७ ॥

पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
कालीयफणिमाणिक्यरञ्जिश्रीपदाम्बुजः ॥ १८ ॥

दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥ १९ ॥

जलक्रीडासमासक्तगोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥ २० ॥

सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ।
एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥ २१ ॥

कृष्णेन कृष्णभक्तानां गीतं गीतामृतं परम् ।
स्तोत्रं कृष्णप्रियकरं श्रुतं तस्मान्मया परम् ॥ २२ ॥

कृष्णनामामृतं नाम परमानन्दकारणम् ।
ईतिबाधादिदुःखघ्नं परमायुष्यवर्धनम् ॥ २३ ॥

दानं व्रतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ।
जपतां शृण्वतामेतत् कोटि कोटि गुणं भवेत् ॥ २४ ॥

पुत्रप्रदमपुत्राणां अगतीनां गतिप्रदम् ।
धनावहं दरिद्राणां जयेच्छूनां जयावहम् ॥ २५ ॥

शिशूनां गोकुलानां च पुष्टिदं पुण्यवर्धनम् ।
बालरोगग्रहादीनां शमनं शान्तिमुक्तिदम् ॥ २६ ॥

समस्तकामदं सद्यः कोटिजन्माघनाशनम् ।
अन्ते कृष्णस्मरणदं भवतापत्रयापहम् ॥ २७ ॥

कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥ २८ ॥

इमं मन्त्रं जपन् नित्यं व्रजंस्तिष्ठन् दिवानिशि ।
सर्वग्रहानुग्रहभाक् सर्वप्रियतमो नरः ॥ २९ ॥

पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् ।
निर्विष्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ ३० ॥

॥ इति श्रीब्रह्माण्डपुराणे ब्रह्मनारदसंवादे
श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ॥

॥ समाप्ता श्रीमद्भागवतदशमस्कन्धहवनपद्धतिः ॥



ಶ್ರೀಸತ್ಯಧ್ಯಾನ ವಿದ್ಯಾಪೀಠದ ಕುಲಪತಿ ಭಾನುವಿನ ದೀಧೀತಿ, ಔದಾರ್ಯದ ಮೂರುತಿ ಮಧ್ವ ಸಿದ್ಧಾಂತ ಸ್ಥಾಪನೆಯ ರತಿ, ರಾಮಾಯಣ, ಮಹಾಭಾರತ, ಭಾಗವತ, ಸರ್ವಮೂಲಗತ ಪ್ರಮೇಯಗಳನ್ನು ಎಲ್ಲೆಡೆ ಸ್ಥಾಪಿಸುವ ಉದ್ದಾಮಗತಿ, ಶಾಂತಮತಿ, ಉತ್ಸಾಹದ ವರ್ತಿ, ಶಾಸ್ತ್ರ ಧರ್ಮ, ಸದಾಚಾರ, ಸದ್ವಿವೇಕಗಳೆಂಬ ಉಪದೇಶಾಮೃತದಿಂದ ಸಿದ್ಧ ಪಡಿಸಿದ ಶಿಷ್ಯತತಿ; ಸಕಲರಲ್ಲಿ ಸಾತ್ವಿಕ ಚೈತನ್ಯ ತುಂಬುವ ಬ್ರಹ್ಮಾತ್ಮದಾಸರಾದ ನಮ್ಮ ವಿದ್ಯಾಗುರುಗಳಾದ ಮಹಾಮಹೋಪಾಧ್ಯಾಯ, ಪಂಡಿತ, ಪೂಜ್ಯ **ಮಾಹುಲಿ ವಿದ್ಯಾಸಿಂಹಾಚಾರ್ಯ** ಹಾಗೂ ವಾತ್ಸಲ್ಯದ ಅಮೃತಕಡಲಾದ **ಗುರುಪತ್ನಿ ಕುಂ.ಸೌ. ಪ್ರಜ್ಞಾದೇವಿ**ಯರಿಗೆ ನನ್ನ ಅನಂತ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳು.

ಪೂಜ್ಯ ಗುರುಗಳ ಷಷ್ಠ್ಯಬ್ದಪೂರ್ತಿನಿಮಿತ್ತ ಶ್ರೀಮದ್ಭಾಗವತ **ದಶಮಸ್ಕಂಧ ಸ್ವಾಹಾಕಾರ ಪದ್ಧತಿಃ** ಗ್ರಂಥಕುಸುಮವನ್ನು ಅಸ್ಮದ್-ಗುರ್ವಂತರ್ಗತ, ಶ್ರೀ ಸತ್ಯಾತ್ಮತೀರ್ಥ ಗುರ್ವಂತರ್ಗತ ಭಾರತೀರಮಣ ಮುಖ್ಯಪ್ರಾಣಾಂತರ್ಗತ ಅಂಭೃಣಿಪತಿ ವೇದವ್ಯಾಸಾಭಿನ್ನ ರುಕ್ಮಿಣಿ-ಸತ್ಯಭಾಮಾಸಮೇತ ಶ್ರೀಕೃಷ್ಣನಿಗೆ ಅರ್ಪಿಸುತ್ತೇನೆ.

ಸಮರ್ಪ್ಯ ಸ್ವಕೃತಾಂ ಸ್ವಸ್ಮಿನ್ ಪ್ರೀಯತಾಂ ಸ್ವಯಮೇವ ಸಃ ||